ज्ञौ कुजोंगारकः आर्किः सौरः एनौह्योनमः संज्ञौ एनेयथाक्रमंसत्वादिगुणाधिपतयोग्रहाः प्रयोजनं सत्वंरजस्तमोवाविंशांशेयस्यभास्करस्ताहृगिति स्वजातके अन्येपुनः ग्रहबलाद्दर्णयंति तथाच श्रीदेवकीर्तिः बलवद्भिस्तद्गुणोभवेत्जातइति अत्राचार्यस्ययवनेश्वरेणसहमतभेदः तेनभौमःसा त्विकउक्तः तथाचतद्वाक्यं सत्वाधिकाभास्करभौमजीवाःप्रवृत्यात्मकोराजसिकःशशीच शनैश्चरस्तामसिकोबुधस्तुसंयोगतोन्यात्समतेविशेषान् आ चार्यस्यसत्यवचनमभिमतं तथाचसत्यः तामसिकोकुजसौरी राजसिकोभार्गवः शशिसुतश्च जीवशशिभास्कराः सात्विकाग्रहवत् प्रकृतयो नृणां एवंयत्रयत्राचार्यस्य यवनेश्वरेण सहमतभेदस्तत्रसत्यमतमपि अथपूर्वमतमभिहितं सत्वंकुजन्चंद्रार्कजीवाः पुनः किमित्युक्तंउच्यते इ

मधुपिंगलदृक्चतुरस्रतनुः पित्तप्रकृतिः सविताल्पकचः तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्चशशीमृदुवाक्शुभदृक् ८

हगुणवचनः सत्वशब्दस्तत्रशौर्यपर्यायः कार्याकार्यप्रवृत्तीनांसिंहादीनामप्यस्ति येनएकाकिनोपिवनवासिनः तथाच एकाकिनिवनवासिन्यरा जलक्ष्मण्यनीतिशास्त्रज्ञे सत्वोच्छ्रितेमृगपतौराजेतिगिरःपरिणमंति अथगुणस्वरूपं यःसात्विकस्तस्यदयास्थिरत्वंसत्यार्जवंब्राह्मणदेवभक्तिः रजोधिकः काव्यकलाशतस्त्रीसंसक्तचित्तःपुरुषोतिशूरः तमोधिकोवंचयितापरेषांमूर्खोलसःक्रोधपरोतिनिद्रइति ७ अथचंद्रार्कयोःस्वरूपंश्लोट केनाह मधुपिंगलदृगिति मधुवत्पिंगलादृष्टिर्यस्यसः ईषत्कातराक्षः चतुरस्रतनुः प्रसारितभुजद्वयप्रमाणसमोच्छ्रायः पित्तप्रकृतिः पित्ताधिकः अल्पकचोविरलकेशः एवंविधःसविताआदित्यः तनुवृत्ततनुरित्यादि तन्वीचासौवृत्ताचतनुवृत्तातादृशीतनुर्यस्यसतनुवृत्ततनुः कृशवर्तुलांगइत्यर्थः अथबहुवातकफः प्रभूतमारुतश्लेष्मा प्राज्ञोमेधावी मृदुवाक्कोमलभाषी शुभदृक् दर्शनीयाक्षः एवंविधःशशीचंद्रः ८ श्रीगजाननप्रसन्न

अथ अंगारकबुधयोः स्वरूपंस्वागतयाह क्रूराइति क्रूरादुष्टाहक्दृष्टिर्यस्य सक्रूरहगोंगारकः सचतरुणमूर्तिः नित्यंयौवनोपेताकारविग्रहः उदारोदाता पैत्ति
कः पित्तबहुलः सचपलोनीवास्थिरचित्तः कृशमध्यस्तनूदरः एवंविधोंगारकः सौमः श्लिष्टवाकइत्यादि श्लिष्टवाकगद्गदभाषी सततहास्यरुचिः
नित्यंपरिहासशीलः पित्तमारुतकफप्रकृतिर्दोषत्रयोल्बण स्वभावः एवंविधोज्ञोबुधः ९ अथजीवशुक्रयोः स्वरूपंवंशस्थंदसिकेनाह बृहत्तनुरिति बृ
हत्तनुःस्थूलशरीरः मूर्धजाःकेशाःईक्षणे नयनेचकपिलपिंगलेचयस्यकपिलकेश कातराक्षइत्यर्थः श्रेष्ठमतिर्धर्मोज्ञमज्ञः कफात्मकः
कफाधिकशरीरः श्लेष्मात्मा एवंविधोबृहस्पतिः भृगुरित्यादि सुखीनित्यंसुखासक्तः कांतवपुर्दर्शनीयशरीरः सुलोचनःशोभनाक्षः कफानिला

क्रूरहक्तरुणमूर्तिरुदारःपैत्तिकःसुचपलःकृशमध्यः श्लिष्टवाक्सततहास्यरुचिर्ज्ञःपित्तमारुतकफप्रकृतिश्च ९ बृह
त्तनुःपिंगलमूर्धजेक्षणोबृहस्पतिःश्रेष्ठमतिःकफात्मकः भृगुःसुखीकांतवपुःसुलोचनः कफानिलात्मासितवक्रमूर्द्धजः१०

त्मा श्लेष्ममारुतप्रकृतिः असितवक्रमूर्धजः असिताःकृष्णावक्राः कुटिलाः मूर्धजाः केशाः यस्यकृष्णाकुटिलकेशइत्यर्थः एवंविधोभृगुः शुक्रः१
अधुनाशनैश्चरस्वरूपंस्नाय्वादिसारत्वंचग्रहाश्रयंवंसंततिलकेनाह मंदोलसइति अलसःक्रियास्वपटुःकपिलहक् कातराक्षःकृशं दुर्बलं दीर्घम्
उच्चतरंगात्रंयस्य गात्राणिवासः दुर्बलोच्चदेहः स्थूलद्विजोबृहद्दंतः परुषरोमकचः रूक्षतनूरुहकेशः अनिलात्मा वातप्रकृतिः एवंविधोमंदः श
नैश्चरःस्नाय्वस्थीत्यादि मंदादीनांग्रहाणां स्नाय्वादिसारत्वं स्नाय्वस्थिनीप्रसिद्धार्थेदेहवतांशनैश्चरादित्यौ स्नायुर्मंदः शनैश्चरः शिरासारःअ
स्थिअर्कः आदित्यः अस्थिसारः असृग्रुधिरंतच्चंद्रमाः तक्त्वमेनहुधः अथशब्दआनंतर्यार्थे शुक्रंरेतः तच्छुक्रः वसामेदस्तत्सुरेज्योगुरुः मज्जा

अस्थ्यंतर्गतोधातुविशेषः सभौमः ग्रहाणांस्वरूपज्ञानप्रयोजनम् लग्ननवांशपतुल्यतनुःस्यादित्यत्रोपयुज्यते जन्मकालेयोग्रहोबलवान्तत्पठितस्वरूपस्तत्कालजातोभवति तद्धातुसारश्च हृतनष्टादिप्रश्नकालेप्येवंविधधातुरूपाश्चौरादयः व्याधिप्रश्नेयल्लग्नंयच्चलग्नेनवांशकोवर्ततेतत्स्वामिनोबलवशादभिहितदोषप्रवापीडा ११ अधुनाग्रहाणांस्थानवस्त्रद्रव्यंतत्रप्रभुत्वंशार्दूलविक्रीडितेनाह देवांबिति अर्कात्प्रभृतितदादीनांग्रहाणांक्रमात् देवादीनिस्थानानि तत्रदेवस्थानमादित्यस्य अंबुस्थानंचंद्रमसः अग्निस्थानंभौमस्यविहारभूमिः क्रीडास्थानंबुधस्य कोशोभांडारागारंतत्स्थानंबृहस्पतेः शयनस्थानंशुक्रस्य क्षित्युत्करः अवकरराशिस्तत्स्थानंशनैश्चरस्य एतेषांस्थानानांएतेस्वामिनः प्रयोजनं बलवतिगृहेग्रहोक्तस्थाने

मंदोलसःकपिलदृक्कृशदीर्घगात्रः स्थूलद्विजःपरुषरोमकचोनिलात्मा स्नाय्वस्थ्यसृक्त्वगथशुक्रवसाःसमज्जामंदार्कचंद्रबु-
धशुक्रसुरेज्यभौमाः ११ देवांब्वग्निविहारकोशशयनक्षित्युत्करेशाःक्रमाद्वस्त्रंस्थूलमभुक्तमग्निकहतंमध्यंदृढंस्फाटितम्
ताम्रंस्यान्मणिहेमयुक्तिरजतान्यर्काच्चमुक्तायसीद्रेष्काणैःशिशिरादयःशशिरुचेज्ञग्वादिषूद्यत्सुवा १२ श्रीसांबस॰

प्रसवज्ञानं हृतनष्टदेश्चौरादेःतदेवस्थानं द्रव्यस्यचवस्त्रमित्यादि अर्कादितिसर्वत्रानुवृत्तिः तत्स्थूलतंतुकृतमादित्यस्यवस्त्रं अभुक्तंनवंचंद्रस्य अग्निनाहतंएकदेशदग्धंभौमस्य केनांबुनाहतंक्लिन्नंबुधस्य मध्यंनातिनवंनातिजीर्णंबृहस्पतेः दृढंकालांतरस्थायिशुक्रस्यस्फाटितंजीर्णंशनैश्चरस्य प्रयोजनं सूतिकावस्त्रज्ञानम् हृतनष्टादिचिंतायांचौरादेर्बलवद्ग्रहवशाद्वस्त्रज्ञानं ताम्रंस्यादित्यादि ताम्रमादित्यस्य चंद्रस्यमणयः भौमस्यहेमसुवर्णंबुधस्ययुक्तिः युज्यतइतियुक्तिः रीतिकांस्यादि रजतंरौप्यंबृहस्पतेः मुक्ताशुक्रस्य अयःकृष्णलोहंसीसत्रपुणीचशनैश्चरस्य तथाचानेनैवसूक्ष्म

जातकेउक्तं अर्कादिताम्रमणिहेमशुक्तिरजतानिमौक्तिकंलोहं वक्तव्यं बलवद्भिःस्वस्थानेहेमजीवेपि तथाचबादरायणः अर्कस्यताम्रंमणयोहिमांशोर्भौम-
स्यहेमेंदुसुतस्यशुक्तिः जीवस्यरौप्यंस्वगृहेस्थितस्यतस्यैवहेमोशनसश्चमुक्ता तीक्ष्णांशसूर्देहमभवस्यसीसंकृष्णायसंचप्रवदंतितज्ज्ञाःप्रयोजनं सूतिका
गृहेबलवद्ग्रहेद्रव्यकर्ताहृतनष्टादिचिंतायांचतद्द्रव्यनाशादिपरिज्ञानं तच्छुभदशायांतस्मिन्नुपचयस्थेतदाप्तिः उक्तविपरीतेहानिः द्रेष्काणैरित्यादि अत्रश
कारादिभिर्गुपर्यंतैर्वर्णैःसंज्ञाद्यैः शनैश्चरप्रभृतीनांगुर्वंतानांवृत्तानुरोधान्निर्देशःकृतः शनैश्चरशुक्ररुधिरचंद्रबुधगुरुषूद्यत्सुलग्नगतेषुशिशिरादयः ष
डृतवोज्ञेयाः तत्रशकारोपलक्षितः शनैश्चरः तस्मिन्नुदयेलग्नस्थेशिशिरऋतुर्विज्ञेयः शुकारोपलक्षितः शुक्रः तस्मिन्नुदयेवसंतः रुकारोपलक्षितोरु
धिरोभौमस्तस्मिन्नुदयेग्रीष्मः चकारोपलक्षितश्चंद्रस्तस्मिन्नुदयेवर्षाज्ञेयः ज्ञोबुधस्तस्मिन्नुदयेशरत् गुकारोपलक्षितोगुरुस्तस्मिन्नुदयेहेमंतः आदि
त्येप्युदयेग्रीष्मः तथाचबादरायणः ग्रीष्मप्रथमवदंति कुजार्काविति द्रेष्काणैरित्यस्यवाइत्यनेनव्यवहितेनसंबंधः द्रेष्काणैर्वोदयाद्भिःशनैश्चरादिसंबं
धिभिःशिशिरादयोज्ञेयाः एतदुक्तंभवति लग्नेग्रहासंभवेशनैश्चरद्रेष्काणेलग्नगतेशिशिरः एवंशुक्रद्रेष्काणेवसंतः भौमद्रेष्काणेग्रीष्मः रविद्रेष्काणेग्री
ष्मः एवंचंद्रद्रेष्काणेवर्षाः बुधद्रेष्काणेशरत् जीवद्रेष्काणेहेमंतः अत्रचमुख्योग्रहोदयेनर्तुनिर्देशःकर्तव्यः तदभावेद्रेष्काणेनेतिज्ञातव्यम् वक्रीणामुदयो
पिद्रेष्काणेनैव केचिद्वक्रीणामुदयेबलवद्ग्रहेणेतिव्याचक्षते तथाचमणित्थः रव्याद्यैर्लग्नोपगतैर्योबलवान्तद्ग्रहर्तुनिर्देशइति तत्रैतज्ज्ञानम् लग्नेयो
ग्रहस्थितस्तदुक्तऋतुर्वाच्यः बहुषुलग्नगतेषुयोबलवान् ग्रहाभावेद्रेष्काणपतेर्ऋतुनिर्देशः प्रयोजनंनष्टजातकेऋतुनिर्देशः इतिहृतनष्टादिचिंतायांचे
ति अत्राचार्येणग्रहाणांशाखाधिपत्यंनोक्तम् उक्तंचस्वल्पजातके ऋगथर्वसामयजुषामधिपागुरुसौम्यभौमसिताः ऋग्वेदाधिपतिर्गुरुः अथर्ववेदाधि
पतिःसौम्योबुधः सामवेदाधिपतिर्भौमः यजुर्वेदाधिपतिःशुक्रःप्रयोजनं बलवतिशाखाधिपेब्राह्मणादिस्तच्छाखापाठकोभवति ब्राह्मणेचौरेज्ञातेशा

रवाविज्ञानम् अनिष्टस्थानस्थेग्रहे तन्मंत्रैः शांतिरिति १२ अथग्रहाणांदृष्टिस्थानानिनिसर्गदृष्टिफलानिचमहर्षिण्याह त्रिदशेतियस्मिन्स्थानेग्रहाःस्थितास्तस्मात्रिदशा
दीनिस्थानानिचरणाभिवृद्धितः पादवृध्याऽवलोकयंति ग्रहोयस्मिन्राशौस्थितः तस्माद्यत्तृतीयदशमराशीयोतौचरणपादेन चतुर्थभागदृष्ट्याऽवलोकयंति ए
वंत्रिकोणस्थौनवपंचमस्थानगतावर्धदृष्ट्याचतुरस्रेऽष्टमचतुर्थे अष्टमचतुर्थस्थानस्थौपादहीनदृष्ट्या सप्तमगंगृहंपरिपूर्णदृष्ट्याचरणाभिवृद्धितइत्यत्राभि
शब्दोवीप्सांद्योतयति चरणवृद्ध्यापाद वृध्येत्यर्थः यावत्पाददृष्ट्यापश्यन्तितावत्फलंप्रयच्छंति तथाचस्वल्पजातके दशमत्तृतीयेनवमपंचमेचतुर्थाष्टमेकलत्रंच
पश्यंतिपादवृद्ध्याफलानिचैवंप्रयच्छंति अर्थादेवग्रहोत्तस्थानानिनपश्यंतीति तथाचसारावल्याम् सद्मपश्यंतिसदाग्रहाश्चरणवृद्धितः सर्वे त्रिदशत्रिको

त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयंतिचरणाभिवृद्धितः रविजामरेज्य
रुधिराः परेचयेक्रमशोभवंतिकिलवीक्षणेधिकाः १३ श्रीसीतारामचंद्राः

णचतुरस्रसप्तगतान्फलंक्रमेणैव पूर्णंपश्यतिरविजस्तृतीयदशमेत्रिकोणमपिजीवः चतुरस्रंभूमिसुतः सितार्कबुधहिमकराःकलत्रंच तथाचयवनेश्वरः द्वौ
पश्चिमौषष्ठमथद्वितीयंसंस्थानराशेःपरित्यज्यराशिं शेषान्ग्रहःपश्यतिसर्वकालमिष्टेषुचैषांविहिताहगिष्टा यात्रिभेदृष्टिफलंसमग्रंस्वपादहीनंचतुरस्रयोश्च
त्रिकोणयोर्दृष्टिफलार्धमाहुर्दुश्चिक्यसंज्ञेदशमेचपादम् रविजामरेज्यरुधिराइति किलेत्यागमसूचने चरणाभिवृद्धितइत्यनुवर्तते एतेरविजादयश्चर-
णाभिवृद्धितः पादोपचयाद्वीक्षणेदर्शनेक्रमशोधिकफलप्रदाभवंति रविजःसौरःसदर्शनेपादफलप्रदः अमरेज्योबृहस्पतिरर्धफलप्रदः रुधिरोंगारकः सः
पादहीनफलप्रदः अपरेर्कचंद्रबुधशुक्रास्तेवीक्षणेसमग्रफलप्रदाः एतन्नैसर्गिकंग्रहाणांदृष्टिफलं स्थानवशादेतेषांयथास्वंदृष्टिफलमूलम् एवमेकेव्याच

क्षते अपरेत्वाहुः स्थानफलमेनत् तेनत्रिदशादिस्थानगतान् ग्रहराशीन्पश्यंति रविजादयोदर्शनेधिकफलप्रदाभवंति तद्यथा तृतीयदशमस्थान् ग्रहान् राशी
न्वाशनैश्चरः पश्यन्नन्येभ्योग्रहेभ्योधिकफलप्रदोभवति परिपूर्णपश्यतीत्यर्थः एवंत्रिकोणस्थान्जीवः चतुरस्रगान्भौमः सप्तमस्थान्सूर्यचंद्रबुधशुक्राः
एतच्चबहुतराणांआचार्याणांमतं तथाचभगवान्गार्गिः दुश्चिक्यस्तगतान् सौरस्त्रिकोणस्थान्बृहस्पतिः चतुर्थाष्टमगान्भौमः शेषाः सप्तमसंस्थितान्
भवंतिवीक्षणेनित्यमुक्ताधिकफलाग्रहाइति १३ अधुनाग्रहाणांकालनिर्देशंचवैनालीयेनाह अयनइति भास्करादादित्यात्प्रभृत्ययनादिकालनिर्देशः
तत्रायननिर्देशोभास्करात्सूर्यात् क्षणोमुहूर्तस्तन्निर्देशश्चंद्रात् वासरोदिवसस्तन्निर्देशोभौमात् ऋतुर्मासद्वयात्मकस्तन्निर्देशोबुधात् मासनिर्देशो–
जीवात् मासार्द्धपक्षस्तन्निर्देशःशुक्रात् समःसंवत्सरस्तन्निर्देशःसौरात् प्रयोजनम् प्रश्नलग्नेयस्यग्रहस्यनवांशकोदयः सःग्रहस्तस्मान्नवांशका

अयनक्षणवासरर्तवोमासोर्द्धंचसमाश्चभास्करात् कटुकलवणतिक्तमिश्रितामधुराम्लौच्चकषायइत्यपि १४ द्यावत्संख्येनवां

शकेभवतितावत्संख्योऽयनादिकोग्रहोपलक्षितः कालशुभाशुभफलपंक्तौवाच्यः अन्येत्वेवंव्याचक्षते लग्नेयावत्संख्योनवांशकउदितस्तावत्संख्यो
यनादिकालोंशपतिवशाद्वक्तव्यः तथाचमणित्थः लग्नांशकपतितुल्यः कालोलग्नोदितांशसमतुल्यः वक्तव्योरिपुविजयेगर्भाधानेथकार्यसंयोगेवक्त
व्यः कटुकलवणेत्यादि भास्करादादित्यात् कटुकादिरसनिर्देशः तत्रादित्यात्सूर्यात्कटुकस्यरसस्यनिर्देशः कटुकंमरीचादिचंद्रात्लवणस्य भौ
मात्तिक्तस्य तिक्तंलिंबादिबुधान्मिश्रस्य षड्रसस्य जीवान्मधुरस्यमिष्टस्य शुक्रादाम्लस्य सौरात्कषायस्यप्रयोजनम् आधानकालेयोबलवान् तद्‌
क्तरसस्यदोहददोगर्भिण्याभवति तथाचसारावल्याम् मासतृतीयेस्त्रीणांदोहदकोजायतेवश्यम् मासाधिपस्यभावैर्लग्नप्रयोगादिभिश्चिंत्यम् भोज

नाश्रयेचनक्षत्रेग्रहोदयेतन्नवांशेवा तदुक्तंरसान्वितभोजनज्ञानमिति १४ अधुनामित्रामित्रविधिंशार्दूलविक्रीडितेनाह जीवइति सूर्यादीनांग्रहाणांक्रमाज्जीवा दयः सुहृदः तत्रादित्यस्य सूर्यस्यजीवोबृहस्पतिः सुहृन्मित्रं जीवबुधौगुरुसौम्यौचंद्रस्य शक्रबुधौभौमस्य विगतोर्कः सूर्योयेभ्योग्रहेभ्यो तेसूर्यवर्जि ताः सर्वएवबुधस्य विकुजाविगतांगारकाः सर्वएवबृहस्प तेःवींद्वर्काविगतौचंद्रार्कौयेभ्यस्तेसर्वएवशुक्रस्य विकुजेंद्विनाः कुजोभौमइंदुश्चंद्रः इनः सूर्यः एतेविकुजेंद्विनाः सर्वएवसौरस्य शनैश्चरस्य एवंकेषांचिन्मतंनबहूनां अत्रचतेषांशत्रुमित्रव्यवहारएवेष्टोनोदासीनव्यवहारस्तस्मान्मित्रेभ्योन्येत्यमित्रा- णीति केचिद्यवनेश्वरादयः तथाच रवेर्गुरुर्मित्रमतोन्यथान्येगुरोस्तुभौमंपरिहृत्यसर्वे चांद्रेरनर्कोभृगुनंदनस्यव्यर्केंद्वोर्येः सुहृदः प्रविष्टाः १ भौमस्य शुक्रोशशिजश्चमित्रमिंदोर्बुधंदेवगुरुंचविद्यात् सौरस्यमित्राण्यकुजेंदुसूर्याः शेषान्रिपून्विद्धिनृणांचनद्वत् २ सत्योक्तइति सत्योक्तेहोराशास्त्रेस्वत्रि

जीवोजीवबुधौसितेंदुतनयौव्यर्काविभौमाः क्रमाद्वींद्वर्काविकुजेंद्विनाश्चसुहृदः केषांचिदेवंमतं सत्योक्तेसुहृदस्त्रिकोण भवनात्स्वात्स्वात्यधीधर्मपाः स्वोच्चायुःसुखपाः स्वलक्षणविधेर्नान्योर्विरोधादिति १५

कोणभवनादात्मीयमूलत्रिकोणराशेः स्वां त्यधीधर्मपाः स्वोच्चायुःसुखपाश्चतेग्रहाः सुहृदोभवंति तत्रत्रिकोणंमूलत्रिकोणंतस्मात्स्वपोद्वितीयराश्याधिपः तस्मादेवांत्यपोद्वादशस्थानाधिपः धीस्थानपः पंचमस्थाधिपः धर्मपोनवमाधिपः स्वोच्चपोग्रहउच्चस्यस्वामी आयुषोष्टमस्थानस्याधिपः सुखपश्चतुर्थस्थानाधिपतिः ग्रहोमित्रंभवति स्वलक्षणविधे र्विरोधादन्यैः अग्रिमस्थानाधिपतिभिर्ग्रहैः सहनायंमित्रा मित्रविभागः कल्पनीयः विरोधादसुहृद्वत्स्वंचतल्लक्षणंचस्वलक्षणंस्वलक्षणोविधिः तेन- विरोधस्तस्मात् एतदुक्तंभवति यःस्वविधिः मित्रलक्षणावभागः प्रदर्शितः अतोन्यस्थानाधिपायेग्रहास्तेग्रहस्यसुहृदोनभवंति तथाचसत्यः सुहृद-

स्त्रिकोणभवनाद्गृहस्थसतभेव्ययेथधनभवने स्वजनेनिधनेधर्मेस्वोच्चेचभवंतिनोशेषाः स्वजनसंज्ञंचतुर्थस्थानं ततोद्विराश्यधिपोमित्रसंज्ञः एकराश्यधिपो
मध्यमः अनुक्तराश्यधिपःशत्रुः वक्ष्यतिच श्लोकाननुक्तभूपान्सल्हत्सपरिपूर्नसंचिंत्यनैसर्गिकानिति एकराश्यधिपोमध्यस्थइति यदुक्तं तथाच चं
द्रार्कावेकराश्यधिपावपिमित्रसंज्ञोभवतः तयोर्हिराशिद्वयस्याधिपत्याभावात् राशिद्वयस्ययोधिपतिर्ग्रहः सएव यद्युच्चराश्यधिपत्वात्त्रिभपलं
प्राप्नोति तथापिद्विभपलएवज्ञातव्यः तस्यस्वराशिव्यतिरेकात् एतन्मंदबुद्धिव्युत्पादनार्थंस्पष्टतरंव्याख्यायते तद्यथादित्यस्यसिंहस्त्रिकोणः त
स्माद्द्वादशस्थानस्यकर्कटस्यचंद्रमाअधिपतिः सएकराश्यधिपोपिसन्द्वितीयस्यराश्यधिपत्यस्यभावादादित्यस्यमित्रम् सिंहाच्चतुर्थोवृश्चिकः
नवमोमेषः तयोर्भौमोधिपतिः आदित्यस्यस्वोच्चंमेषः तस्याधिपोभौमः मेषस्यसिंहनवमत्वादादित्यस्यस्वोच्चत्वादेकराशित्वंमेषस्यैकत्वाद्वृश्चिक
स्यद्वितीयत्वाद्भौमः द्विराश्यधिपोजातः तेनादित्यस्यमित्रं सिंहात्पंचमाष्टमौधन्विमीनौतयोरधिपतिर्जीवः सचोक्तस्थानद्वयस्याधिपतित्वादादित्यस्य
मित्रं गुरुःसिंहाद्द्वितीयैकादशौकन्यामिथुनौतयोर्बुधःस्वामी तत्रद्वितीयस्थानस्योक्तत्वादेकादशस्यानुक्तत्वात् पठितैकराश्यधिपत्वाद्बुधोरवेर्मध्यमः
सिंहात्षष्ठसप्तमस्थानेमकरकुंभौनोक्तौतयोराधिपत्यादादित्यस्यशनैश्चरःशत्रुः सिंहाद्दशमतृतीयेवृषतुले तयोरनुक्तयोःस्थानयोःराश्यधिपत्वाच्छुक्र
आदित्यस्यशत्रुः एवंरवेः अथचंद्रस्य तथाचंद्रस्यवृषस्त्रिकोणस्तस्माच्चतुर्थस्थानंसिंहस्तस्याधिपः सूर्यः सएकराश्यधिपोपिसद्वितीयस्यराशेर
धिपत्यस्याभावाच्चंद्रस्यमित्रं वृषाद्द्वितीयोमिथुनः पंचमःकन्या तयोर्बुधः अधिपतिः सचोक्तस्थानद्वयस्याधिपत्वाच्चंद्रस्यमित्रं वृषात्सप्तमद्वादशौवृ
श्चिकमेषौतयोर्भौमःस्वामी तत्रद्वादशस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाद्भौमश्चंद्रस्यमध्यमः वृषादष्टमैकादशौधन्विमीनौतयोः
गुरुःस्वामी तत्रैकादशस्थानस्यानुक्तत्वात् अष्टमस्योक्तत्वात्पठितैकराश्यधिपत्वाज्जीवश्चंद्रस्यमध्यमः चंद्रस्यवृषउच्चः वृषात्षष्ठस्तुलातयोः शुक्रो

धिपतिस्तत्र वृषस्योच्चत्वेनोक्तत्वात् षष्ठस्यानुक्तत्वात्पठितैकराश्यधिपत्वाच्चंद्रस्य शुक्रो मध्यमः वृषान्नवमदशमौ मकरकुंभौ तयोः स्वामी शनिः तत्र नवमस्योक्त-
त्वाद्दशमस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरः चंद्रस्य मध्यमः एवं चंद्रस्य अथ भौमस्य तद्यथा भौमस्य मेषस्त्रिकोणं मेषाच्चतुर्थस्थानस्य कर्कटस्याधिपश्चंद्रः स
एकराश्यधिपोपि सन्द्वितीयराशेरधिपत्याभावाद्भौमस्य मित्रं मेषात्पंचमस्य सिंहस्याधिपः सूर्यः स एकराश्यधिपोपि सन्द्वितीयराशेरधिपत्याभावाद्भौमस्य मित्रं मे-
षान्नवमद्वादशौ धन्विमीनौ तयोर्जीवोधिपतिः स चोक्तस्थानद्वयस्याधिपत्याद्भौमस्य मित्रं मेषात्तृतीयषष्ठौ मिथुनकन्ये तयोरपठितत्वात् तयोर्बुधस्याधिपत्याद्भौम-
स्य बुधः शत्रुः मेषाद्द्वितीयसप्तमौ वृषतुले तयोः शुक्रः स्वामी तत्र द्वितीयस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाच्छुक्रो भौमस्य मध्यमः मेषाद्दशमैका-
दशौ मकरकुंभौ तयोः सौरोधिपतिः भौमस्य मकर उच्चः तस्योक्तत्वादेकादशस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरो भौमस्य मध्यमः एवं भौमस्य अथ बुधस्य
कन्या मूलत्रिकोणं तस्माद्द्वादशस्थानस्य सिंहस्याधिपतिः सूर्यः स एकराश्यधिपोपि सन्द्वितीयराशेरधिपत्याभावात् बुधस्य मित्रं सूर्यः कन्यायाः द्वितीयनवमौ तु-
लवृषौ तयोः शुक्रोधिपतिः स चोक्तस्थानद्वयस्याधिपत्वाद्बुधस्य मित्रं कन्यायाः एकादशस्थानस्य कर्कटस्याधिपतिश्चंद्रः तस्यानुक्तत्वाद्बुधस्य शत्रुः कन्यायाः तृती-
याष्टमौ वृश्चिकमेषौ तयोर्भौमोधिपतिः तत्राष्टमस्योक्तत्वात्तृतीयस्यानुक्तत्वात्पठितैकराश्यधिपत्वात् भौमो बुधस्य मध्यमः कन्यायाश्चतुर्थसप्तमौ धन्विमीनौ
तयोर्जीवोधिपतिस्तत्र चतुर्थस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाज्जीवो बुधस्य मध्यमः कन्यायाः पंचमषष्ठौ मकरकुंभौ तयोः सौरोधिप-
तिस्तत्र पंचमस्योक्तत्वात्षष्ठस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरो बुधस्य मध्यमः एवं बुधस्य अथ गुरोः जीवस्य धन्वी त्रिकोणं तस्मादष्टमस्थानस्य कर्कट-
स्याधिपतिश्चंद्रः स एकराश्यधिपोपि सन्द्वितीयराशेरधिपत्याभावाज्जीवस्य मित्रं धनुषः पंचमद्वादशौ मेषवृश्चिकौ तयोः भौमोधिपतिः स चोक्तस्थानद्वयस्या-
धिपतित्वाज्जीवस्य मित्रं धनुषो नवमस्य सिंहस्याधिपतिः सूर्यः स एकराश्यधिपोपि सन्द्वितीयस्य राशेरधिपत्याभावाज्जीवस्य मित्रम् धनुषः पंचमद्वा-

दशौमेषवृश्चिकौतयोर्भौमोधिपतिः सचोक्तस्थानस्याधिपत्याज्जीवस्यमित्रं धनुषोद्वितीयतृतीयौमकरकुंभौतयोः सौरोधिपतिः तत्रद्वितीयस्योक्तत्वात्तृतीय
स्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरोजीवस्यमध्यस्थः धनुषःसप्तमदशमेमिथुनकन्येतयोर्बुधोधिपतिः स्थानद्वयस्यानुक्तत्वाद्गुरोर्बुधःशत्रुः धनुषः
षष्ठैकादशस्थानेवृषतुलेतयोः शुक्रोधिपतिः स्थानद्वयस्यानुक्तत्वाच्छुक्रोगुरोःशत्रुः एवंजीवस्य अथशुक्रस्य शुक्रस्यतुलस्त्रिकोणंतस्मान्नव
मद्वादशस्थानेमिथुनकन्येतयोर्बुधोधिपतिः सचोक्तस्थानद्वयस्याधिपतित्वाच्छुक्रस्यमित्रं तुलायाःचतुर्थपंचमौमकरकुंभौतयोरधिपतिःसौरः सचो
क्तस्थानद्वयस्याधिपत्वाच्छुक्रस्यसौरःमित्रं तुलाद्वितीयसप्तमौवृश्चिकमेषौतयोर्भौमोधिपतिः तत्रद्वितीयस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्य
धिपत्वाद्भौमःशुक्रस्यमध्यस्थः तुलातृतीयषष्ठौधन्विमीनौतयोर्जीवोधिपतिःतत्रमीनः शुक्रस्योच्चस्योक्तत्वाद्धनुषोनुक्तत्वात्पठितैकराश्यधिपत्वाज्जी
वःशुक्रस्यमध्यस्थः तुलाद्दशमःकर्कटस्तस्यानुक्तत्वाच्छुक्रस्यचंद्रःशत्रुः तुलादेकादशःसिंहस्तस्याधिपःसूर्यः एकराश्यधिपोपिसन्द्वितीयराशौ
राधिपत्याभावात् स्तस्यस्थानस्यानुक्तत्वाच्छुक्रस्यार्कःशत्रुः एवंशुक्रस्य अथसौरस्य सौरस्यकुंभस्त्रिकोणं तस्मात्पंचमाष्टमौमिथुनकन्येतयो
र्बुधोधिपतिः सचोक्तस्थानस्याधिपतित्वात्सौरस्यबुधोमित्रं सौरस्योच्चस्तुलाकुंभाच्चतुर्थनवमौवृषतुलौतयोरधिपतिःशुक्रः सचोक्तस्थानद्वयस्या
धिपतित्वात्सौरस्यशुक्रोमित्रं कुंभाद्वितीयैकादशौमीनधन्विनौतयोर्जीवोधिपतिः तत्रद्वितीयस्योक्तत्वादेकादशस्यानुक्तत्वात्पठितैकराश्यधिप-
त्वात्तस्यजीवोमध्यस्थः कुंभात्षष्ठःकर्कटस्तस्याधिपतिश्चंद्रस्तस्यानुक्तत्वात्सौरस्यचंद्रःशत्रुःकुंभात्सप्तमः सिंहस्तस्याधिपतिः सूर्यस्तस्यानुक्त
त्वात्सौरस्यसूर्यःशत्रुःकुंभात्तृतीयदशमौमेषवृश्चिकौतयोर्भौमोधिपतिस्तयोरनुक्तत्वाद्भौमः सौरस्यशत्रुरिति १५ अधुनासत्योक्तेनैकश्लोकानुक्त
भणनग्रहस्यसुहृन्मध्यस्थशत्रून्शार्दूलविक्रीडितद्वयेनाह शत्रूमंदसितावितिरवेरादित्यस्यमंदःसौरःसितःशुक्रः एतौद्वौशत्रूरिपू शशि

जोबुधः समोमध्यस्थः नशत्रुर्नमित्रमुदासीनइत्यर्थः शेषाग्रहाश्चंद्रांगारकगुरवोमित्राणीति तीक्ष्णांशुरित्यादि शीतगोश्चंद्रमसः तीक्ष्णांशुः सूर्यः हिमरश्मिजोबुधः एतौद्वौसुहृदौमित्रे शेषाः सर्वएवभौमजीवशुक्रसौराः समामध्यस्थाउदासीनाः जीवेंदूष्णकराइति कुजस्यभौमस्यजीवोबृहस्पतिः इंदुश्चंद्रः उष्णकरःसूर्यः एतेसुहृदोमित्राणि ज्ञोबुधः अरिःशत्रुः सितार्कीशुक्रसौरौसमौमध्यस्थाविति मित्रेसूर्यसितावितिसूर्योरविः सितःशुक्रः एतौद्वौबुधस्यमित्रेसुहृदौहिमगुश्चंद्रमाः शत्रुररिः अपरेन्येभौमगुरुसौराः समामध्यस्थाइति १६ सूरेरित्यादि सूरेर्बृहस्पतेः सौम्योबुधः सितःशुक्रः एतावरीशत्रू रविसुतः सौरोमध्यस्थः अपरेअन्येरविचंद्रभौमाः अन्यथामित्राणीत्यर्थः सौम्यार्कीत्यादि शुक्रस्यसौम्यार्कीबुधसौरौ

शत्रूमंदसितौसमश्चशशिजोमित्राणिशेषारवेस्तीक्ष्णांशुर्हिमरश्मिजश्चसुहृदौशेषाःसमाःशीतगोः जीवेंदूष्णकराःकुजस्यसुहृदोज्ञोरिःसितार्कीसमौमित्रेसूर्यसितौबुधस्यहिमगुःशत्रुःसमाश्चापरे १६ सूरेःसौम्यसितावरीरविसुतोमध्योपरेत्वन्यथासौम्यार्कीसुहृदौसमौकुजगुरूशुक्रस्यशेषावरी शुक्रज्ञौसुहृदौसमःसुरगुरुःसौरस्यचान्येरयोयेप्रोक्ताःस्वत्रिकोणभादिषुपुनस्तेमीमयाकीर्तिताः १७

सुहृदौमित्रे कुजोभौमः गुरुर्जीवः एतौद्वौसमौमध्यस्थौ शेषावादित्यचंद्रावरीशत्रू शुक्रज्ञावित्यादि सौरस्यशनेः शुक्रज्ञौसितबुधौसुहृदौमित्रे सुरगुरुर्जीवः समोमध्यस्थः अन्येअपरे रविशशिभौमाः अरयः शत्रवः येप्रोक्ताइत्यादि येमयास्वत्रिकोणभादिषुपूर्वंत्रिकोणभवना स्वांत्यधीधर्मपाइत्यादिग्रंथेनोक्तास्तएवेहप्रविभज्यपुनर्भूयः प्रकीर्तिताः उदाहरणत्वेनप्रदर्शिताइति १७ एवंनैसर्गिकंमित्रामित्रमध्यस्थविभागमुक्त्वाधुनातात्कालिकंमित्रामित्रविभागं शार्दूलविक्रीडितेनाह अन्योन्येति अन्योन्यस्यपर

स्परमेतेषुधनादिषुस्थानेषुग्रहस्यग्रहाव्यवस्थितास्तत्कालेजन्मनियात्रायांविवाहेप्रश्नेवातत्समयेसुहृदोमित्राणिभवंति धनस्थानंद्वितीयं व्ययस्थानंद्वादशं
मायस्थानंएकादशंसहजस्थानंतृतीयं व्यापारस्थानंकर्माख्यंदशमंबंधुस्थानंचतुर्थंएतेषुस्थानेषुयोग्रहःस्थितः सयस्मात्ग्रहाद्व्यवस्थितस्तस्यसुहृन्मित्रं
भवति सचतस्यापिभवति यतउक्तमन्योन्यस्येति स्वतुंगभवनेप्येकेइति एकेऽन्येपुनराचार्याः ग्रहस्ययस्योच्चेयोग्रहस्थितः सतस्यस्वोच्चस्थितंमित्रमि
छंति तेचयवनेश्वरादयः तथाचतद्वाक्यं मूलत्रिकोणात्सुनधर्मबंधुपुत्रव्ययस्थानगताग्रहेंद्राः तात्कालिकास्तेसुहृदोभवंतिस्वोच्चेचयोयस्यविहृच्छवीर्य
इति एतदप्याचार्यस्यनाभिमतं यस्मादनेनैवस्वल्पजातकेउक्तं तत्कालेचदशायबंधुसहजस्वांत्येषुमित्रंस्थिताइति अरयस्त्वन्यथेति अन्यथा अन्येन

अन्योन्यस्यधनव्ययायसहजव्यापारबंधुस्थितास्तत्कालेसुहृदःस्वतुंगभवनेप्येकेरयस्त्वन्यथा छ्येका
नुक्तभपान्सुहृत्समरिपून्संचिंत्यनैसर्गिकान्स्तत्कालेचपुनस्तुतानथिसुहृन्मित्रादिभिःकल्पयेत् १८

प्रकारेणग्रहस्यग्रहाव्यवस्थितास्तत्कालेऽरयःशत्रवोभवंति अन्योन्यमिति तद्यथा एकराशिगतःपंचमषष्ठसप्तमाष्टमनवमस्थानस्थश्चतत्कालेश
त्रुर्ग्रहस्यग्रहोभवति च्ये कानुक्तभपानिति पूर्वमेवदर्शित द्वितीयभपानेकभपाननुक्तभपांश्चमित्रमध्यस्थशत्रून्नैसर्गिकान् शत्रूमंदसितावित्यादिना
ग्रंथेनोक्तास्तान्संचिंत्यविज्ञायज्ञातातत्कालेजन्मादौनानेवाथिसुहृन्मित्रादिभिरुपलक्षितान्कल्पयेत् तत्रधनादीनिमित्रस्थानानितेषुनैसर्गिकसुहृ
त्स्थितोथिमित्रंभवतिमध्यस्थोमित्रं शत्रुर्मध्यस्थइति धनादिवर्जिते ष न्येषुस्थितोनैसर्गसुहृन्मध्यस्थोभवति मध्यस्थःशत्रुः शत्रुरथिशत्रुरिति
अ सुनाग्रहाणांचतुर्विधंबलम् स्थान दिक् चेष्टा कालबलाख्यम् १८ ॐ ॐ ॐ ॐ ॐ

तत्रतावत्स्थानदिग्बलंद्वोधकेनाह स्वोच्चसुहृदिति स्वग्रहणंप्रत्येकमभिसंबध्यते तत्रस्वोच्चेस्थितोग्रहोबलवान् भवतितात्कालिकस्यसुहृदोमित्रस्यक्षेत्रे-स्थितोबलवानेव स्वत्रिकोणे आत्मीयेमूलत्रिकोणेस्थितः स्वनवांशेस्थितः स्वगृहेस्वराशावुपगतः प्राप्तोबलवानेव एतेषामन्यतमेप्यवस्थितोग्रहः स्थानब-लयुक्तोभवति अत्रार्कस्यसिंहःस्वत्रिकोणं तदेवगृहंक्षेत्रम् चंद्रस्यवृषउच्चः सएवत्रिकोणं भौमस्यमेषःत्रिकोणं तदेवस्वक्षेत्रं बुधस्यकन्याउच्चः सैवमू-लत्रिकोणंस्वक्षेत्रंच गुरोः धन्वीत्रिकोणंतदेवस्वक्षेत्रं शुक्रस्यतुलात्रिकोणंतदेवस्वक्षेत्रं सौरस्यकुंभस्त्रिकोणंतदेवस्वक्षेत्रं एतेषामाचार्येणविशेषोनोक्तः अस्माभिरन्यहोराशास्त्रादानीयशिष्यहितायेहलिख्यते तथाचसारावल्याम् विंशतिरंशाः सिंहेत्रिकोणमपरेस्वभवनमर्कस्य उच्चंभागत्रितयंवृषभेंदोः स्यात्त्रिकोणमपरेंशाः द्वादशभागामेषेत्रिकोणमपरेस्वभंतुभौमस्य उच्चफलं कन्यायांबुधस्यतिथ्यंशकैः सदाचिंत्यं परतस्त्रिकोणजाते पंचभिरंशैः

**स्वोच्चसुहृत्स्वत्रिकोणनवांशैःस्थानबलंस्वगृहोपगतैश्च दिक्षुबुधांगिरसौरविभौमौसूर्यसुतःसितशीतकरौच १९**




स्वराशिजंपरतः दशभिर्भागैर्जीवस्यत्रिकोणफलंस्वभंपरंचापे शुक्रस्यतुतिथयोंशास्त्रिकोणमपरेधटेस्वराशिश्च कुंभेत्रिकोणनिजभेरविज-स्यरवेर्यथासिंहे एतदार्याचतुष्टयम् दिक्षुबुधांगिरसावित्यादि प्राच्याद्यासुचतसृषुदिक्षुक्रमात् बुधादयोबलिनोभवंति तत्रपूर्वस्यांबुधांगि-रसौज्ञजीवौबलिनौभवतः लग्नस्थावित्यर्थः दक्षिणस्यांरविभौमौसूर्यांगारकौदशमस्थावित्यर्थः पश्चिमायांसूर्यसुतःशनिः सप्तमस्थइ-त्यर्थः उत्तरस्यांसितशीतकरौशुक्रचंद्रौचतुर्थस्थावित्यर्थः योग्रहोयत्रबलीसतस्मात्सप्तमस्थानस्थोविबलोभवति मध्येनुपाततउत्थापित-सर्वत्रेयंपरिभाषा ग्रहाणामुच्चनीचप्रविभागेराशीनांदिग्बलप्रविभागेपि तथाचयवनेश्वरः गुर्वेदवौपूर्वविलग्नसंस्थौनभस्थलस्थौच-

दिवाकरशौरी सौरोथवाशुक्रनिशाकरोतुतुलेस्थितावन्यबलोभवेतामिति अन्यबलेग्रहाणामंतरेनुपात्तनइत्येवमुक्तंएवमुक्तः एतद्ग्रहाणांदिग्बलमुच्यते १९ अ
धुनाचेष्टाबलंदोधकेनाह उदगयनेति मकरादिराशिषट्कमुत्तरमयनं कर्कादिराशिषट्कंदक्षिणमयनमिति उदगयनेउत्तरायणेरविशीतमयूखौ सूर्यचंद्रमसौ
बलिनौभवतः परिशेषाः भौमबुधगुरुसितसौराः वक्रगाविपरीतगतयोबलिनोभवंति तथाच समागमगाश्चंद्रेणसहिताबलिनएव चंद्रेणसंयोगोग्रहाणां
समागमशब्दवाच्यः रविणासहाऽस्तमयोभौमादीनांपरस्परंयुद्धं उक्तंचाचार्यविष्णुचंद्रेण दिवसकरेणास्तमयः समागमः शीतरश्मिसहितानां कुसुतादी
नांयुद्धं निगद्यतेन्योन्ययुक्तानामिति विपुलकराइति विपुलाःकरायेषांतेविपुलकराः विस्तीर्णरश्मयोबलिनोभवंति शीघ्रकेंद्रेद्वितीयतृतीयपदस्थेग्र

उदगयनेरविशीतमयूखौवक्रसमागमगाः परिशेषाः विपुलकरायुधिचोत्तमसंस्थाश्चेष्टित
वीर्ययुताः परिकल्प्याः २०

हस्यविपुलकरत्वंप्रायःसंभवति वक्रासन्नत्वात् युधिसंग्रामेचोत्तरसंस्थाबलिनएव कुसुतादीनांयु
द्धमित्युक्तं तत्रयःउत्तरदिग्भागसंस्थितोजयीसचबलवान् उत्तरसंस्थत्वमत्रोपलक्षणार्थं यस्तेजयीसएवबलवान् तत्रैतज्जयलक्षणं दक्षिणादिक्स्थः पु
रुषोवेपथुरप्राप्यसन्निवृत्तनतुः अधिरूढोविकृतोनिःप्रभोविवर्णश्चयः सजितः उक्तविपरीतलक्षणसंपन्नोजयगतोविनिर्दिष्टः विपुलःस्निग्धोद्युतिमान्
दक्षिणादिक्स्थोपिजयप्रयुक्तइति एतच्चयुक्तस्यप्रायःसंभवति यस्मात्पुलिशाचार्यःसर्वेजयिनउदक्स्थादक्षिणादिक्स्थोजयीशुक्रइति एतच्चेष्टाबलम्
एषामन्यतमेनसंयुक्तश्चेष्टाबलसंयुक्तोभवति २० ७ ७ ७ ७ ७ ७

अधुनाग्रहाणांकालबलंनैसर्गिकबलंचमालिन्याह निशीति शशिकुजसौराश्चंद्रभौमशनयः निशिरात्रौवीर्यवंतोबलिनः ज्ञोबुधःसर्वदा सर्वस्मिन्कालेनि-
शिदिनेचबली अन्येपरेरविगुरुसिताअह्निदिनेबलिनः क्रूराःपापाःप्रागुक्ताः बहुलपक्षेकृष्णपक्षेबलिनःसौम्याःशुभग्रहाःसितगताःशुक्लपक्षेबलिनः
कृष्णपक्षेचंद्रमाअपिक्रूरोबलवान्भवति यस्माद्यवनेश्वरः मासेतुशुक्लेप्रतिपत्प्रवृत्तेःपूर्वशशीमध्यबलोदशाहे श्रेष्ठोद्वितीयेऽल्पबलस्तृतीयेसौम्यैस्तु
दृष्टोबलवान्सदैवेतिसितगताः शुक्लपक्षेस्थिताःसौम्याः बलिनः द्यूयनेतिप्रमाणयस्यद्ब्यनंतत्तुवर्षस्ववर्षेआत्मीयवर्षेयोग्रहोयत्रवर्षेधिपतिःस
तत्रबलवान्स्वदिवसेआत्मीयवासरेस्वहोरायां कालहोरायाम् तथा स्वमासेयस्मिन्मासेयोऽधिपतिःसतत्रबली द्यूयनदिवसहोरामासनांयेधिपतय-
स्तैर्यैहैःकालबलोपेतैरुपलक्षणीयं तेकालबलोपेताइत्यर्थः केचिद्ब्यनदिवसहोरामासपैरितिपठंति अन्येस्वदिवससमहोरामासगैरितिपठंति

निशिशशिकुजसौराःसर्वदाज्ञोह्निचान्येबहुलसितगताःस्युःक्रूरसौम्याःक्रमेण द्यूयनदिवसहोरामासपैःकालवीर्यंशरुबु-
गुशुचसाद्याद्वृद्धितोवीर्यवंतः २१

एषःसापराधःपाठः एतेषुकालेषुसर्वेएवबलिनोभवंति एतद्ग्रहाणांकालवीर्यं एषामन्यतमेनसंयु-
क्तः कालबलसंपन्नोभवति शरुबुगुशुचशाद्याद्वीति शादयोवर्णाः येषांशाकारआद्यस्तेशाद्याः शकाराद्यः शनैश्चरः सर्वेभ्योबलहीनःरुकाराद्योरु-
धिरःभौमः शनैश्चराद्बलवान् बुकाराद्योबुधः सभौमाद्बलवान् गुकाराद्योगुरुः सबुधाद्बली शुकाराद्यःशुक्रःसजीवाद्बली चकाराद्यश्चंद्रः स
शुक्राद्बली सकाराद्यःसविता सचंद्राद्बलीति एतद्ग्रहाणांनैसर्गिकंबलं यस्मादनेनैवस्वल्पजातकेउक्तम् मंदारसौम्यवाक्पतिसितचंद्रार्कायथोत्तरं
बलिनःनैसर्गिकबलमेतद्बलसाम्येस्यादधिकचिंतेति यत्रग्रहाणांग्रहयोर्वाबलसाम्यंभवति तत्रस्माद्बलाधिक्यम् अधिवीर्यवत्ताज्ञेयेति अत्राचार्ये

पञ्चधः प्रकारस्य ग्रहाणां बलस्य तच्चास्माभिः शिष्यहितहेतवेऽन्यशास्त्राल्लिख्यते तथाच सारावल्यां उच्चबलेन समेतः परां विभूतिं ग्रहः प्रसाधयति
स्वत्रिकोणबलः पुंसां सा नित्यं बलवति लंबा स्वर्क्षबलेन च सहितः प्रमुदितधनधान्यसंपदाक्रांतं मित्रभबलसंयुक्तो जनयति कीर्त्यान्वितं पुरुषं
तेजस्विनमतिसुखिनं सुस्थिरविभवं नृपाच्च लब्धधनं स्वनवांशकबलयुक्तं करोति पुरुषं प्रसिद्धं च सूक्ष्मजातके उक्तं बलवान्मित्रस्वग्रहोच्चन
वांशकेष्वीक्षितः शुभैश्चापि चंद्रसितौ स्त्रीक्षेत्रे पुरुषक्षेत्रोपगाः शेषा इति तत्र शुभदृष्टस्य फलं तावत् शुभदर्शनबलसहितः पुरुषं कुर्याद्धनान्वितं
ख्यातं सुभगं प्रधानमखिलं सुरूपदेहं च सौम्यं च पुंस्त्रीभवनबलेन च करोति जनपूजितं कलाकुशलं पुरुषं प्रसन्नचित्तं कल्पं परलोकभीरुं च
आशाबलसमवेतो नयति स्वदिशं नभश्चरः पुरुषं नीत्वा वस्त्रविभूषणवाहनसौख्यान्वितं कुरुते क्वचिद्राज्यं क्वचित्पूजां क्वचिद्द्रव्यं क्वचिद्यशः ददा-
ति विहगश्चित्रं चेष्टावीर्यसमन्वितः वक्रिणस्तु महावीर्याः शुभा राज्यप्रदा ग्रहाः पापा व्यसनदाः पुंसां कुर्वंति च वृथाटनं स्वस्थशरीरसमागमसु-
खमाहवजयबलेन विदधाति शुभमतुलं विहगेंद्रो राज्यं च विनिर्जितारातिं रात्रिदिवाबलपूर्णैर्भूगजलाभेन शौर्यपरिवृद्ध्या मलिनयंति ते प्रेप
क्षं संयुक्ते यो नरः प्रकटः द्विगुणं द्विगुणं दद्युर्वर्षाधिपमासदिवसहोरेशाः कुर्युर्वृद्धा सौख्यं स्वदशासु धनं च कीर्तिं च पक्षबलाढ्याः पुनाशं रत्नांबर -
हस्तिसंपदं दद्युः स्त्रीकनकभूमिलाभं कीर्तिं च शशांकधवलतरां सकलबलभारभरिता निर्मलकरजालभास्कराः सततं राज्यं ग्रहा विदद्युः सौख्यं
च मनोरथातीतं आचारसौख्यशुभशौचयुताः सुरूपाः तेजस्विनः कृतविदो द्विजदेवभक्ताः सद्वस्त्रमाल्यजनभूषणसंप्रियाश्च सौम्यग्रहैर्ब
लयुतैः पुरुषा भवंति लुब्धाः कुकर्मनिरता निजकार्यनिष्ठाः पापान्विताः सकलहाश्च तमोभिभूताः क्रूराः शठा वधरता मलिनाः कृतघ्नाः पापग्रहैर्बलयु
तैः पिशुनाः कुरूपाः पुंराशिषु ग्रहेंद्रैर्धीराः संग्रामकांक्षिणो बलिनः निस्नेहाः सुकठोराः क्रूरा मूर्खाश्च जायंते युवतिभवनेषु च मृदवः संग्राम-

भीरवः पुरुषाः जलकुसुमवस्त्राभिरताः सौम्याः कलहैः सुसंयुक्ताइति एतत्सर्वसुगमं इतिभट्टोत्पलविरचितायांबृहज्जातकविवृतौग्रहयोनिभेदाध्यायोद्वितीयः २ अथातोवियोनिजन्माध्यायोव्याख्यायते कःपुनःसवियोनिजन्मेत्युच्यते विविधवियोनिजन्मनांतिर्यक्पक्षिस्थावरादीनामुत्पत्तिर्वियोनिजन्मेत्युच्यते तत्रप्रष्टुःसकाशाज्जातककालंप्रश्नकालंवाविज्ञायवियोनिजन्मनिश्चयज्ञानंभवति तत्रवसंततिलकेनाह क्रूरग्रहैःसुबलिभिरिति चंद्रोपगद्विरसभागेसमानरूपमिति चंद्रमाउपगतोव्यवस्थितोयस्मिन्द्विरसभागेद्वादशभागेतत्समानरूपंतत्सदृशरूपंसत्वंप्राणिनंवियोनिजन्मानंवदेत् सचाद्विरसभागोयदिवियोनिसंज्ञोभवति सचंद्राक्रांतोद्वादशभागोयदिवियोनिसंज्ञस्तदैवंवदेन्नान्यथेति

क्रूरग्रहैःसुबलिभिर्विबलैश्चसौम्यैः क्लीबेचतुष्टयगतेतदवेक्षणाद्वा
चंद्रोपगद्विरसभागसमानरूपंसत्वंवदेद्यदिभवेत्सवियोनिसंज्ञः १

तत्रमेषद्वादशभागव्यवस्थितेचंद्रमसिमेषाख्यस्यवियोनिजन्मज्ञातव्यं अजादेः छागादेः एवंवृषद्वादशभागव्यवस्थितेवृषाख्यस्यमाहिषादेश्च कर्कटद्वादशभागव्यवस्थितेकुलीरादेः सिंहद्वादशभागव्यवस्थितेसिंहद्वीपिश्रृगालश्वानमार्जारादिसत्वानांजन्म वृश्चिकद्वादशभागव्यवस्थिते सर्पकीटादेः धनुर्धरद्वादशभागेद्वितीयार्धेव्यवस्थितेऽश्वगर्दभजन्म मकरद्वादशभागेपूर्वार्धेव्यवस्थितेमृगजन्म अपरेमंडूकादेर्जलचरप्राणिन इच्छंति मीनेमीनस्यैव किमेतावतेववियोनिजन्मनिश्चयं नेत्याह क्रूरग्रहैरित्यादि क्रूरग्रहैरादित्यांगारकशनैश्चरैर्बुधेनचतदेकतमेनयुक्तेनक्षीणेनचंद्रमसाएतैःसुबलिभिरितिबलसंयुक्तैः सौम्यैः शुभग्रहैः क्रूरैरपरिशिष्टैर्विबलैर्वीर्यरहितैः क्लीबेशनैश्चरेबुधेवाचतुष्टयगतेकेंद्रस्थेएकोवि

योनिजन्मयोगः तदवेक्षणाद्वा चंद्रमसिप्रदर्शितवियोनिजन्मद्वादशभागव्यवस्थिते क्रूरैर्बलयुक्तैः सौम्यैः विबलैर्हीनबलैर्यत्रतत्रावस्थितेनबुधेनशनै
श्चरेण वालग्नेदृष्टेवियोनिजन्मज्ञानेद्वितीयोयोगः अर्थादेवद्विपदद्वादशभागव्यवस्थितेचंद्रमसिपूर्वोक्तयोगाभावेद्विपदजन्मतथाचसारावल्याम् क्रू
रैःसबलसमेतैर्विबलैःसौम्यैर्वियोनिभागगते चंद्रेज्ञशनिकेंद्रेतद्वीक्षितेचोदयेवियोनिःस्यात् मेषेशशीतदंशेछागादिप्रसवमाहुराचार्याः गो
महिषाणाम् गोंशेनररूपाणांतृतीयेंशे तत्रचतुर्थेभागेकूर्मादीनांभवेदुदकजानां व्याघ्रादीनांपरतः परतोज्ञेयंनराणांच वणिगंशेनर रूपाद्दश्चिकभा
गेनथाभुजंगाद्याःखरतुरगाद्यानवमेमृगशिखिनांस्यात्तथादशमेज्ञेयाश्चतत्रविविधावृक्षास्तृणजातयश्चित्राः एकादशेचपुरुषाजलजानांविधाश्चां

पापाबलिनःस्वभागगाःपारक्येविबलाश्चशोभनाः लग्नंचवियोनिसंज्ञकंदृष्ट्वात्रापिवियोनिमादिशेत् २ क्रियः
शिरोवक्त्रगलेवृषोन्येपादांसकंपृष्ठमुरोथपार्श्वे कुक्षिस्त्वपानाङ्घ्र्यथमेढ्रमुष्कौस्फिक्पुच्छमित्याहचतुष्पदांगे ३

त्ये श्वमार्जारमूषकादीनांसंख्याज्ञानं श्वप्रभृतीनांचयावंतोद्वादशांशाःकालग्ने तावंतिवदेत्प्राज्ञः पुंस्त्रीसंज्ञान्यपत्यानि १ अथवियोनिजन्मज्ञानयोगां
तरंवैतालार्येनाह पापाइति चंद्रोपगद्विरसभागसमानरूपमित्यनुवर्तते पापाःक्रूराग्रहाः प्रागुक्ताबलिनः सबलाः नकेवलंयावत्स्वभागगाः स्वनवां
शस्थाः भागग्रहणेनेहनवांशकएवज्ञातव्यः शोभनाःसौम्यग्रहाः प्रागुक्ताःपारक्येपरनवांशकेविबलावीर्यरहिताव्यवस्थिताः लग्नंतात्कालिकं-
चयदिवियोनिसंज्ञकंभवति तदात्राप्यस्मिन्नपियोगेचंद्रोपगद्विरसभागसमानरूपंसत्वंजातमितिवदेत् २ अथवियोनावपिचतुष्पदानांप्राधान्ये
नोपयोगित्वात्तदंगविभागंराश्यात्मकमुपजातिकयाह क्रियइति क्रियोमेषश्चतुष्पदानांशिरस्तदुपलक्षितमित्यर्थः वृषोवक्त्रगलेवक्त्रंमुखंगलंकं-

बलंवृषः अन्येमिथुनादयोयथाक्रमंपादादिमिथुनःपादांसकंपादौपूर्वपादावंसौस्कंधौपृष्ठंकर्कटः उरोवक्षःसिंहः अथशब्दआनंतर्येपार्श्वे पार्श्वद्व-
यंकन्या कुक्षिद्वयंतुला अपानंगुदोवृश्चिकः अंघ्रीपश्चिमपादौधन्वी अथशब्दोपादपूर्णे मेढ्रलिंगमुष्कौवृषणौमकरः स्फिजौकुंभः पुच्छंलांगूलं
मीनइतिशब्दः प्रकारेकेचित्चतुष्पदांगेराशिविभागमाहुः आहेतिब्रुवंत्याचार्याइतिवाक्याध्याहारः चतुष्पदग्रहणमुपलक्षणार्थं पक्षिणामप्ये
वं तेषांपूर्वपादस्थानेपक्षपालीशेषंसामान्यं प्रयोजनं राश्युपलक्षितेंगेवर्णोपघातादेर्विज्ञानमिति ३ अथवियोनिवर्णज्ञानंवैश्वदेव्याह लग्नां
शइति लग्नेयेनग्रहेणयोगोयस्तत्रव्यवस्थितस्तस्ययोवर्णः आगुक्तः वर्णास्ताम्रसितातिरक्तहरितइत्याद्याः तंद्वर्णवियोनौसत्वजातेवदेत्

**लग्नांशकाद्ग्रहयोगेक्षणाद्वावर्णान्वदेद्बलयुक्ताद्वियोनौ दृष्ट्यासमानान्प्रवदेत्स्वसंख्ययारेखांवदेत्स्मरसंस्थैश्चपृष्ठे**

त्तनथदौवा ईक्षणाद्वेति अथलग्नेनकश्चिद्ग्रहोभवति नदायेनग्रहेणलग्नमीक्ष्यतेदृश्यतेतस्ययोवर्णस्तंवदेत् अथलग्नंनकेनचिद्युतंदृष्टंभवति
तदालग्नांशकात् लग्नेयद्राशिनवांशकोदयोभवतित द्राशिवर्णरक्तःश्वेतइत्यादिकवावदेत् दृष्ट्यासमानानिति अथबहुभिर्ग्रहैर्लग्नंयुतंदृष्टंच
भवतितदाबहूनेववर्णान्वदेत् तत्रापियोवीर्यवान्सबलस्तद्वर्णबाहुल्यं यदुक्तं बलयुक्तात्इति अथस्वस्वामिनायुतदृष्टस्यराशेःसंबंधिनवांश
कोदयोलग्नगतोभवति तदातद्वर्णमिववदेत् यत्रयोग्रहोवियोनौयस्मिन्नंगेव्यवस्थितस्तत्रात्मीयवर्णंकरोति एतत्कुतोलब्धं सप्तमस्थानगतैः
ग्रहैर्बलवद्ग्रहवर्णं पृष्ठेवियोनौरेखांवदेत् तथाचसारावल्याम् मेषादिभिरुदयस्थैरंशैर्वाग्रहयुतैश्चदृष्टैर्वा स्वगृहांशकसंयोगाद्विद्याद्वर्णान्
पराशकेऋक्षान् १ सप्तमसंस्थाःकुर्युःपृष्ठेरेखास्ववर्णसमा वीक्षंतेयावंतोवियोनिवर्णाश्चतावंतः २ बलदीप्तोगगनचरःकरोतिवर्णवियो-

नीनाम् पीतंकरोतिजीवः शशीसितंभार्गवोविचित्रंच ३ रक्तौदिनकररुधिरौरविजः कृष्णंबुधः शबलं स्वेराशौपरभागेपरराशौस्वेनवांशकेतिष्ठन् ४
पश्यन्ग्रहोविलग्नंस्ववर्णवर्णंतदाकुरुते ४ अधुनापक्षिणोजन्मज्ञानंवंशस्थेनाह खगेति खगेदृक्काणः पक्षिद्रेष्काणस्तत्रपक्षिद्रेष्काणो
मिथुनद्वितीयः सिंहः प्रथमः तुलाद्वितीयः कुंभः प्रथमः एषामन्यतमद्रेष्काणेउदयतिशनैश्चरेंद्वीक्षणयोगसंभवाः यथाक्रमंविहगाः पक्षिणः स्थ
लांबुजाः संभवंति पक्षिद्रेष्काणेशनैश्चरेणयुतेदृष्टेवास्थलजपक्षिणांजन्मवक्तव्यं एवमिंदुनायुतेदृष्टेवाजलजानांपक्षिणांजन्मइति एकोयो
गः अत्रलग्नेप्रथमदशकभागेयोग्रहःस्थितः प्रथमद्रेष्काणस्थः ततःपरमन्यस्मिन्दशकेद्वितीयद्रेष्काणस्थः ततःपरन्यस्मिन्दशकेतृतीयद्रेष्का

खगेदृक्काणेबलसंयुतेनवाग्रहेणयुक्तेचरभांशकोदये बुधां
शकेवाविहगाःस्थलांबुजाः शनैश्चरेंद्वीक्षणयोगसंभवाः ५

णस्थइति एवंत्रयोभागालिप्ताश्चविंशतिक
लाश्चैकनवांशकप्रमाणंपरिकल्प्यं ग्रहस्थितिरन्वेष्यासर्वराशिष्वियंपरिभाषा बलसंयुतेनवाग्रहेणयुक्तेचरभांशकोदयेयस्यनस्यलग्नस्यच
रनवांशकोदयेबलसंयुतेनग्रहेणसंयुक्तेतथेतितेशनैश्चरयुतेदृष्टेस्थलजानांपक्षिणांजन्मचंद्रयुतदृष्टेजलजानांपक्षिणांजन्मज्ञानं द्विती
योयोगः बुधांशकेवेति बुधनवांशकेमिथुनकन्ययोरन्यतमेतात्कालिकस्यलग्नस्योदितेतस्मिंश्चबलवद्ग्रहसंयुक्तेशनैश्चरयुतदृष्टेस्थलजा-
नांजन्म चंद्रयुतदृष्टेजलजानामिति तृतीयोयोगः एतेशनैश्चरस्येंदोर्वासंयोगेक्षणेनवासंभवंतीति तथाचसारावल्याम् विहगोदितदृ
क्काणेग्रहेणबलिनायुतेथचरभांशे बौधांशेवाविहगाःस्थलांबुजाः शनिशशीक्षणायोगात् ५

अधुनावृक्षजन्मज्ञानंवसंततिलकेनाह होरेति होरालग्नंइंदुश्चंद्रः सूरिर्जीवः रविरादित्यः एतैर्विबलैर्वीर्यरहितैः प्रष्टानरूणांवृक्षाणांजन्मवक्त
तिइतिवक्तव्यम् तत्रायंविशेषः तोयस्थलइतितत्रनरूभवोवृक्षजन्मकिं तोयेजलेस्थलेनिर्जलेचेति तत्प्रभेदस्तद्विकल्पोंशकृतोनवांशकविहितः
तत्रपरराश्यंशकोदयेतोयसमीपजान्वृक्षान नूपजान्तोयराशयः कर्कटमकरपश्चार्द्धमीनाः एतैरनूपजवृक्षजन्मेतिज्ञानं इतरराश्यंशकोदये
स्थलवृक्षजन्मज्ञानं तत्रापिसंख्येय लग्नाद्ग्रहइति उदितांशैः स्थलचारीजलचारीवाप्रभवति तदधिपतिर्यावत्संख्यराशौलग्नाद्व्यवस्थितस्ता
वंतएवसंख्यास्तरवोवृक्षाः स्थलजाजलजावावक्तव्याः अत्राप्यंशकपतिवशाद्वक्ष्यमाणायुर्दायविधिनाद्वित्रिगुणत्ववाच्यं स्वतुंगवक्रोपग

होरेंदुसूरिरविभिर्विबलैस्तरूणांतोयस्थलेतरुभवोंशकृतःप्रभेदः लग्नाद्ग्रहःस्थलजलर्क्षपतिस्तुयावां
स्तावंतएवतरवःस्थलतोयजाताः ६ तैस्त्रिसंगुणंद्विरुत्तमस्वांशकभागगैरिति अत्राद्वित्रिगुणत्वेप्रासेयावंत्योगणनाप्र

वंति तावंत्यःकार्यइत्यागमविदः तथाचसारावल्याम् लग्नार्कजीवचंद्रैरबलैःशेषैश्चमूलयोनिःस्यात् स्थलजलभवनविभागाद्वृक्षादीनां
प्रभेदकराः स्थलजलयोगोलग्नाद्यावतिराशौतुतेपिनावंतः द्वित्रिगुणत्वंतेषामायुर्दायप्रकारोक्तं ६ अधुनास्थलजलजानामंशस्वामिव
शाद्वृक्षाणांविशेषज्ञानंमंदाक्रांतयाह अंतःसारानिति रविःसूर्योंशकपतिरंतःसारान् मध्यदृढान् शिंशपादीन्वृक्षान्जनयतिउत्पाद
यति सूर्यसूनुरार्किर्दुर्भगान्दृष्ट्यनसौरभियान्कुशप्रभृतीन्जनयति तुहिनकिरणश्चंद्रः क्षीरोपेतान्सक्षीरान्इक्षुप्रभृतीन्जनयति
भौमःकुजःकंटकाढ्यान्कंटकबहुलान्खदिरप्रभृतीन्जनयति वागीशज्ञाविति वागीशोबृहस्पतिः ज्ञोबुधः एतौद्वौयथासंख्येनसफ

लविफलान्वृक्षान्जनयतः तत्रबृहस्पतिः सफलानाम्रवृक्षप्रभृतीन् बुधोविफलान् येषांलोकेपुष्पमेवोपयुज्यतेनफलानितान्जनयति शुक्रः
पुष्पवृक्षान् मालत्यादीन्जनयति इंदुश्चंद्रः भूयः पुनः स्निग्धान् सचिक्कणान् धवदेवदारुप्रभृतीन्जनयति भूमिपुत्रोंगारकः कटुकविटपा
न् भल्लातकप्रभृतीन्जनयति अत्रोपभयजनितत्वनिर्देशाच्चंद्रभौमयोर्विकल्पनादेशः ७ अथभूतरुशुभाशुभज्ञानंसंख्याचवंशस्थेना
ह शुभोशुभर्क्षेति सएवस्थलजलांशपतिर्ग्रहः शुभस्तत्कालमशुभर्क्षेपापग्रहराशौव्यवस्थितोभवति तदारुचिरंतरुंशोभनंवृक्षंकु
भूमिजमशोभनभूमिजातंवदेत् अन्यथाविपर्ययेविपरीतंवृक्षंकरोति अंशपतिरशुभस्तत्कालंशुभग्रहराशिस्थोभवति तदाअशोभ-

अंतःसारान्जनयतिरविर्दुर्भगानस्तूर्यसूनुः क्षीरोपेतानतुहिनकिरणः कंटकाढ्यांश्चभौमः वागीशज्ञौसफलविफलान्पुष्प
वृक्षांश्चशुक्रः स्निग्धानिंदुः कटुकविटपान् भूमिपुत्रश्च भूयः ७ शुभोशुभर्क्षेरुचिरंकुभूमिजंकरोतिवृक्षंविपरीत-
मन्यथा परांशकेयावतिविच्युतःस्वकाद्भवंतितुल्यास्तरवस्तथाभिधाः ८ 

तंवृक्षंशोभनभूमिजातंवदेत् अर्थादेवशुभग्र
हेशुभक्षेत्रस्थेशुभंवृक्षंशोभनभूमिजातंवदेत् अशुभग्रहे अशुभक्षेत्रस्थेअशोभनवृक्षमशोभनभूमिजातंवदेत् परांशकेयावतीति-
स्वस्थलजलांशपतिर्ग्रहः स्वकादात्मीयादंशकाद्विच्युतश्चलितोयावत्संख्येपरनवांशकेव्यवस्थितः स्वमंशमतिक्रम्ययावत्संख्येपरनवांशके
वर्तते तत्तुल्यास्तत्संख्यास्तथोक्तस्तज्जातीयाश्चतरवोवृक्षाभवंतितावंतएवस्थलजाजलजावातरवःभाक्संख्ययालभ्यचेति तत्रपुनःसंख्या
करणाद्विकल्पेनादेशइति तथाचसारावल्याम् स्वांशात्परांशगामिषुयावत्संख्याभवंतितावंतः स्थलजावाजलजावातरवःभाक्संख्ययाप्रव

देदाति ८ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृत्तौवियोनिजन्माध्यायस्तृतीयः ३ अथातोनिषेकाध्यायोव्याख्यायते तत्रादावृतौस
निगर्भाधानमित्यतः ऋतुनिरूपणमृतावपिस्त्रीपुरुषसंयोगज्ञानंवंशस्थेनाह कुजेंदुहेतुरिति कुजोभौमः इंदुश्चंद्रः तौहेतूकारणंनिमित्तं
यस्यरजसः तत्कुजेंदुहेतुप्रतिमासंमासेमासेप्रतीतिर्भातिमासंस्त्रीणांप्रतिमासमार्तवंकुजेंदुहेतुप्रतिमासग्रहणेनप्रथमोद्भूतरजोनिवृत्तिंद
र्शयन् गर्भग्रहणक्षममार्तवंप्रदर्शयति ऋतौभवमार्तवंकथमित्याह गतेतुपीडर्क्षमनुष्णादीधिताविति अनुष्णादीधितौशीतमयूखे
चंद्रेपीडर्क्षगतेप्रभूतत्वात्स्त्रीणामनुपचयगृहाश्रितेआर्तवकारणंभवति अर्थादेवयदिचंद्रःकुजसंदृष्टोभवति एतदुक्तंभवति स्त्रियो

इतिश्रीभट्टोत्पलवि॰बृहज्जा॰विवृत्तौवियो॰तृतीयः ३ कुजेंदुहेतुप्रतिमासमार्तवंगतेतुपीडर्क्षमनुष्णादी
धितौ अतोन्यथास्थेशुभपुंग्रहेक्षितेनरेणसंयोगमुपैतिकामिनी १

जन्मर्क्षादनुपचयसंस्थश्चंद्रमास्तत्रचयद्यंगार
केणदृश्यतेतदागर्भग्रहणक्षममार्तवहेतुर्भवति अन्यत्रबालवृद्धातुरवंध्याभ्यः अत्रचबादरायणः स्त्रीणांगतोनुपचयर्क्षमनुष्णरश्मिः
संदृश्यतेयदिधरातनयेनतासां गर्भग्रहार्तवमुशंतितदानवंध्यावृद्धातुराल्पवयसामपिचैतदिष्टं १ तथाचसारावल्याम् अनुपचय
राशिसंस्थेकुमुदाकरबंधवेरुधिरदृष्टे प्रतिमासंयुवतीनांभवतीहरजोब्रुवंत्येके इंदुर्जलंकुजोग्निर्जलमस्रंत्वग्निरेवपित्तंस्यात्
एवंरक्तेक्षुभितेपित्तेनरजःप्रवर्ततेस्त्रीषु एवंयद्भवतिरजोगर्भस्यनिमित्तमेवकथितंतत् उपचयसंस्थेविफलंप्रतिमासंदर्शनंतस्य
एवंगर्भग्रहणयोग्यमार्तवंप्रदश्यर्यस्त्रीपुरुषसंयोगसंभवासंभवौप्रदर्शयति अतोन्यथास्थइति अतोन्यथा अस्मादुक्तप्रकारादन्यथास्थे

विपर्ययस्थेचंद्रमसि तत्रोक्तविपर्यस्थः पुरुषजन्मराशेरुपचयस्थश्चंद्रमायदि भवति तस्मिन् शुभेनसौम्येनग्रहेण गुरुणेक्षिते दृष्टे कामिनी स्त्रीनरेणपुरुषेणसहसंयोगंमैथुनसुपैतिगच्छतीतिवक्तव्यम् नन्वत्रातोन्यथास्थ इतिस्त्रियाउपचयस्थः कस्मान्नव्याख्यायते अत्रुक्तमेतत् प्राधान्यात्पुरुषस्यैव यस्माद्बादरायणः पुरुषोपचयगृहस्थोगुरुणायदिदृश्यतेहिममयूखः स्त्रीपुरुषसंयोगंतदावदेदन्यथानैवमिति सा-रावलीकारेणसामान्येनोक्तं तद्यथा उपचयभवनेशशभृत्दृष्टोगुरुणासुहृद्भिरथवासौपुंसांकरोतियोगंविशेषतः शुक्रसंदृष्टः कस्मिन्कालेयंविचारः उच्यते चतुर्थदिनेस्नातायां तथामणित्थः ऋतुविरमेस्नातायांयद्युपचयस्थः शशीभवति बलिनागुरुणादृष्टोभर्त्रासह-संगमश्चतदा राजपुरुषेणरविणावीक्षितेचंद्रे सौम्येनचपलमतिनाभृगुणाकांतेनरूपवता भृत्येनसूर्यपुत्रेणायातिस्त्रीसंगमं-

यथास्तराशिर्मिथुनंसमेतितथैववाच्योमिथुनप्रयोगः असद्गृहालोकित
संयुतेस्तेसरोषइष्टैःसविलासहासः २

हितदा एकैकेनफलंस्यात्दृष्टेनान्यैःकुजादिभिःपापैः सर्वैःस्वगृहंत्यक्त्वागच्छतिवेश्यापदंयुवतिः १ अथमैथुनप्रकारज्ञानमिंद्रवज्रयाह यथास्तराशिरिति आधानलग्नात्सप्तमलग्नाद्वायोस्तराशिःसप्तमोस्तलग्नंस्तत्संज्ञकोयोजंतुस्तन्मिथुनं स्त्रीपुमांसौयथायेनप्रकारेणसमेतिसंयोगंस्फुरतंयाति तथानेनैवप्रकारेणतस्यनरस्यमिथुनप्रयोगः संयोगोवाच्योवक्तव्यः तस्मिन्नेवास्तेसप्तमेस्थानेअसद्गृहालोकितसंयुतेपापग्रहैर्दृष्टेयुक्तेवासरोषः सकलहोमिथुनप्रयोगोवा-च्यः इष्टैःसौम्यैर्युतदृष्टेसविलासहासः सीत्कारादिसंयुक्तोमिथुनप्रयोगोवाच्यः अर्थादेवनकेनचिद्युतदृष्टेनसरोषोनापिसविलासहासइति

मिथ्यश्चुनदृष्टेसरोषोसविलासहासश्चेति तथाचसारावल्याम् द्विपदादयोविलग्नात्स्मरणंकुर्वंतिसप्तमेयद्वत् तद्वत्पुरुषाणामपिगर्भाधानंसमादे
श्यं अस्तेशुभयुतदृष्टेसरोषकलहंभवेत्तत्र सौम्यैःसौम्यंस्मरणंवात्स्यायनसंप्रयोगकारव्यातं २ अथगर्भसंभवासंभवज्ञानंवंशस्थेनाह र
वीति रविःसूर्यः इंदुश्चंद्रः शुक्रःसितःअवनिजोंगारकः एतैःस्वभागगैर्यत्रराशौस्वनवांशकस्थितैरपत्यंभवति गर्भसंभवोभवतीत्यर्थः य
दिचसर्वेस्वभागगानस्युस्तदापुरुषापचयर्क्षगाभ्यांसूर्यसिताभ्यांस्वनवांशकस्थाभ्यामेवंगर्भसंभवोवाच्यः एवंभौमचंद्राभ्यांनार्युपचयर्क्षगा
भ्यांस्वनवांशकस्थाभ्यामाधानकालेऽवश्यमेवापत्यंभवति गर्भसंभवोभवतीत्यर्थः यस्मादनेनैवस्वल्पजातकेउक्तम् बलयुक्तौस्वगृहांशे

रवींदुशुक्रावनिजैःस्वभागगैर्गुरौत्रिकोणोदयसंस्थितेपिवा भवत्यपत्यं-
हिविबीजिनामिमेकराहिमांशोर्विदृशामिवाफलाः ३ ७ ७

ष्वर्कसितावुपचयर्क्षगौपुंसां स्त्रीणांवाकुजचंद्रौयदातदागर्भसंभवोभवति गुरौत्रिकोणोदयसंस्थितेपिवेति गुरौबृहस्पतौत्रिकोणयोर्नवपं
चमयोरुदयेलग्नेपिवासंस्थितेएषामन्यतमस्थानस्थेपिअपत्यंभवति गर्भग्रहणं विबीजिनामिमेइति हियस्मादर्थे इमेहियोगाः विबी
जिनांषंढानांविगतंबीजंवीर्यंयेषांस्त्रीपुरुषाणांतेषामफलाविद्यमानाअपिनसंभवंति अत्रोदाहरणं कराहिमांशोर्विदृशामिवाफलाइति य
थाहिमांशोःशीतरश्मेः चंद्रस्यकराररश्मयोविद्यमानाअपिविदृशामंधानामफलानिष्फलाविगतादृशोयेषांतेविदृशः तेषामिवेति ३ अ
धुनास्त्रीपुंसयोराधानकालवशादासवावधियावच्छुभाशुभज्ञानंवंशस्थेनाह दिवाकरेति दिवाकरात्सूर्यात्स्मरगौसप्तमस्थानस्थौकुजा

र्कजौकुजोंगारकोर्कजः सौरिः यदि भवतः तदा पुंगलस्य मनुष्यस्य गदमदौ रोगमदौ भवतः एतदुक्तं भवति आधानकाले यत्रार्कः स्थितस्तस्मा
त्सप्तमेस्थाने यदांगारको भवति सौरो वा तदा पुंसो रोगमदो भवति स्वमासे एवमिंदोः चंद्रात्सप्तमो भौमः सौरो वा भवति तदा योषितः स्त्रियो रो
गमदो भवति स्वमासे एव व्ययस्वगौ मृत्युकराविति तावेव कुजसौरौ व्ययस्वगौ द्वादशद्वितीयगौ तयोर्दिवाकरेंद्वोः सकाशादुभयत्र पार्श्वे
स्थितयोस्तदा पुंगलयोषितोः स्त्रीपुरुषयोर्मृत्युकरौ भवतः एतदुक्तं भवति सूर्यादर्को द्वादशो द्वितीयो द्वितीयेन तदा तयोर्मध्ये यो बलवान्स-
स्वमासे मृत्युकरो नरस्य भवति चंद्राद प्येवं व्यवस्थिते चंद्रादर्को द्वादशो द्वितीयो द्वितीयेन तदा तयोर्मध्ये यो बलवान्स स्वमासे मृत्युकरो स्त्रियाः भ

दिवाकरेंद्वोः स्मरगौ कुजार्कजौ गदप्रदौ पुंगलयोषितोस्तदा व्ययस्वगौ मृत्युकरौ युतौ तथा तदेकदृष्ट्या मरणाय कल्पि
तौ ४ दिवार्कशुक्रौ पितृमातृसंज्ञितौ शनैश्चरेंदू निशि तद्विपर्ययात् पितृव्यमातृष्वसृसंज्ञितौ च तावथौजयुग्मर्क्षग
तौ तयोः शुभौ ५

वति युतौ तथेति तदिति कुजसौरयोः परामर्शः तयोः कुंजसौरयोर्मध्याद्यदेकेनादित्यो युतः सहितो भवत्यन्येन-
दृश्यते तदा नरस्य मरणाय कल्पितो निश्चितः एवं चंद्रमा यद्येकेन युक्तो भवत्यपरेण दृष्टः तदा स्त्रियो मरणाय कल्पितः द्वयोर्मध्ये यो बलवान्त-
स्य मासे इति ४ अथ निषिक्तस्य पितृमातृपितृव्यमातृस्वसृणां शुभाशुभज्ञानं वंशस्थेनाह दिवार्कशुक्राविति दिवा दिने निषिक्तस्य जात
स्य वा जंतोर्यथाक्रमं पितृमातृसंज्ञितावर्कशुक्रौ भवतः पितृसंज्ञकोर्को मातृसंज्ञकः शुक्रः एवमेव निशि रात्रौ निषिक्तस्य जातस्य वा शनैश्चरें
दू सौरचंद्रौ शनैश्चरो पितृसंज्ञकः चंद्रो मातृसंज्ञकः तद्विपर्ययादिति तद्विपर्ययाद्दिवारात्रिव्यत्ययात्तावेव पूर्वोक्तौ ग्रहौ पितृव्यमातृस्वसृसं-

ज्ञितौभवतः तत्रदिवानिषिक्तस्यजातस्यवाशनैश्चरोपितृव्यसंज्ञः चंद्रोमातृष्वसृसंज्ञः रात्रौनिषिक्तस्यजातस्यवार्कः पितृव्यसंज्ञकः शुक्रोमा
तृष्वसृसंज्ञः तत्संज्ञयोः प्रयोजनं तावर्थौजयुग्मर्क्षगतौतयोः शुभाविति तावेवयथोक्तौग्रहौतयोराजयुग्मर्क्षगतौशुभौज्ञेयौ ओजाविष-
मराशयोयुग्माः समराशयः तत्रदिवार्कोविषमर्क्षगोमेषमिथुनसिंहतुलाधन्विकुंभानामन्यतमस्थः पितुःशुभकृत् रात्रौपितृव्यस्यतथादि
वाशुक्रः समर्क्षगोवृषकर्कटकन्यावृश्चिकमकरमीनानामन्यतमस्थोमातुःशुभकृत् रात्रौमातृष्वसुः शनैश्चरोरात्रौविषमर्क्षगतः पितुः
शुभकृद्दिवापितृव्यस्यतथाचंद्रोरात्रौसमर्क्षगोमातुः शुभकृत् दिवामातृष्वसुः सामर्थ्यादेवोक्तविपर्ययस्थः सएवोक्तयोरशुभः यथादि
वासमक्षेत्रगतोर्कः पितुरशुभोरात्रौपितृव्यस्य दिवाविषमर्क्षगतः शुक्रोमातुरशुभोरात्रौमातृष्वसुः रात्रौसमक्षेत्रगतः शनैश्चरः पितुर

अभिलषद्भिरुदयर्क्षमसद्भिर्मरणमेतिशुभदृष्टिमयाते उदयराशिसहितेचयमेस्त्रीविगलितोडुपतिभूसुतदृष्टे ६

शुभोदिवापितृव्यस्यरात्रौविषमर्क्षगतश्चंद्रमामातुरशुभोदिवामातृष्वसुरिति ५ अथाधानप्रश्नमध्येआधानकालवशात्मातुर्मरणयो
गद्वयमाह उदयर्क्षमुदयलग्नमसद्भिःपापग्रहैरभिलषद्भिः तत्रोदयलग्नाभिलाषिभिः कश्चिल्लग्नाद्द्वितीयस्थग्रहोव्याख्यातः तेषामभि-
मतंयथोदयलग्नादनंतरंतदुभयस्यप्रत्यासन्नतयाभिलषत्युदयर्क्षमिति अन्येपुनर्लग्नाद्द्वादशस्थानस्थग्रहस्योदर्क्षाभिलाषंकथयंति यस्मा
त्तद्विहायोदयराशिगमनंग्रहःकरोति एवंलग्नाद्द्वादशस्थैःपापैर्लग्नेचयदिशुभदृष्टिंसौम्यग्रहदर्शनमयातेअप्राप्तेसौम्यग्रहैरदृश्यमानेस्त्री
योषिद्गर्भिणीमरणमेतिमृत्युंप्राप्नोति अत्रचभगवान्गार्गिः अशुभैर्द्वादशर्क्षस्थैः शुभदृष्टिविवर्जिते आधानलग्नेमरणंयोषितःप्रव-

देव बुधइति योगांतरमाह उदयराशिसहितेचयमेत्यादि यमेशनैश्चरेउदयराशिसहितेलग्नस्थेतस्मिंश्चविगलितेनोडुपतिनानक्षत्रस्वामिना क्षीणचंद्रेणभूसुतेनांगारकेणचदृष्टेवलोकितेस्त्रीगर्भिणीमरणमेति ६ अथयोगांतरंवैतालीयेनाह लग्नमुदयराशिरिंदुश्चंद्रएतौलग्नेंदू पापद्वयमध्यसंस्थितौलग्नस्थेचंद्रमसियद्येकः पापग्रहोद्वादशस्थोभवति द्वितीयस्थोपरः तदालग्नेंदूयुगपत्तुल्यकालेपापद्वयमध्यगावुच्यते अथालग्नेंदूविप्रकृष्टांशकान्वितौभवतस्तत्रैवेकः पापस्तावदप्राप्यस्थितोऽपरस्तावदतिक्रम्यस्थितस्तथापिलग्नेंदूपापद्वयमध्यगावुच्येते अथवाद्वादशस्थानेएकः पापोऽपरोद्वितीयेतृतीयेचंद्रश्चतुर्थेचपापोभवति तदापिलग्नेंदूपापद्वयमध्यगावुच्येते एवंलग्नेंदूय-

पापद्वयमध्यसंस्थितौलग्नेंदूनचसौम्यवीक्षितौ युगपत्पृथगेववावदेन्नारीगर्भयुताविपद्यते ७
क्रूरैः शशिनश्चतुर्थगेलग्नाद्वानिधनाश्रितेकुजे बंध्वंत्यगयोः कुजार्कयोः क्षीणेंदौनिधनायपूर्ववत् ८

दियुगपत्पापद्वयमध्यगतौनचसौम्यवीक्षितौशुभग्रहावलोकितौनभवतस्तदानारीस्त्रीगर्भयुताविपद्यते म्रियते पृथगेवेति अथवा पृथकस्थौ लग्नेंदूभवतस्तयोर्मध्यादेकतमोपिपापद्वयमध्यगोभवति सौम्यगृहदृष्टश्चनभवति तदानारीगर्भयुताविपद्यते म्रियतेइति पृथगेवेति अथवा लग्नात्तृतीयेचंद्रोद्वितीयचतुर्थद्वादशस्थाः पापाः तथापिलग्नेंदूपापमध्यगौभवतः अथवालग्नादेकादशेचंद्रोद्वितीयतृतीयद्वादशगाः पापास्तथापिलग्नेंदूपापद्वयमध्यगौभवतः युगपद्ग्रहणंपादपूर्णार्थंविस्पष्टार्थंवा तदर्थस्यपृथगेवसामर्थ्याल्लब्धत्वादत्रयोगकर्तॄणांग्रहाणांमध्याद्योबलीतन्मासिगर्भिणीमरणंभवतीतिसर्वत्रपरिभाषा ७ अथान्ययोगांतराणिवैतालीयेनाह क्रूरैरिति शशिनश्चंद्रात्क्रू

रैः पापग्रहैः चतुर्थस्थानस्थैर्निधनाश्रिते ऽष्टमस्थानस्थे कुजे भौमे एको योगः अथवा लग्नाच्चतुर्थैः पापैरष्टमे भौमे चैवं द्वितीयो योगः बंधुव्ययग
योः कुजार्कयोरिति लग्नाद्बंधुगते चतुर्थस्थे भौमे व्ययगते द्वादशस्थानस्थे ऽर्के सूर्ये यत्रतत्रस्थे क्षीणेन्दौ परीक्षीणे चंद्रे तृतीयो योगः एषामाधानका
ले कतमस्य संभवे मरणाय पूर्ववन्नारी गर्भयुता विपद्यत इति अधुना मातुः शस्त्रनिमित्तं मरणयोगं गर्भस्रावं चाधानलग्नवशाद्वैतालीयेनाह उ
दयास्त इति निषेककाले कुजार्कयोर्भौमसूर्ययोर्यथासंख्यमुदयास्तगयोर्लग्नसप्तमस्थयोर्लग्ने भौमे सप्तमस्थे ऽर्के गर्भयुतायाः भार्यायाः स्त्रि
यः शस्त्रकृतं शस्त्रहेतुकं मरणं निधनं वदेत् ब्रूयात् तथानेनैव प्रकारेणेति नारी गर्भयुता विपद्यत इत्यर्थः मासाधिपताविति गर्भमासेषु मा

उदयास्तगयोः कुजार्कयोर्निधनं शस्त्रकृतं वदेत्तथा मासाधिपतौ निपीडिते तत्कालं स्रवणं समादि
शेत् ९ शशांकलग्नोपगतैः शुभग्रहैस्त्रिकोणजायाऽर्थसुखास्पदस्थितैः तृतीयलाभर्क्षगतैश्च
पापकैः सुखी तु गर्भो रविणा निरीक्षितः १०

साधिपान्वक्ष्यति कललघनेत्यादिना तत्र निषेककाले यो ग्रहो भौमादिर
न्येन ग्रहेण युद्धे विजितो भवति पराजितो भवति यतः कुसुतादीनां युद्धमित्युक्तम् केतुना वाभिधूमित उल्कया वाभिहतः सोऽपि निपीडितग्रह इत्यु
च्यते सूर्याचंद्रमसौ क्रूरयुक्तौ दृष्टौ वा राहुणा ग्रहणे पीडितौ इत्युच्येते तस्यापि निपीडितस्य ग्रहस्य यो भवति मासो यस्मिन्मासे मासाधिपत्यं तस्य भव
ति तत्कालं तस्मिन्काले गर्भस्य स्रवणं च्युतिं समादिशेत् वदेत् ९ अधुना गर्भपुष्टिज्ञानं वंशस्थेनाह शशांकेति यत्र राशौ शशांकश्चंद्रः स्थि
तस्तत्रैव शुभग्रहैर्व्यवस्थितैर्बुधगुरुसितैरित्यर्थः अथवा लग्नस्थैः शुभग्रहैः लग्ने व्यवस्थितैः अथवा केश्चिच्छशांकोपगतैः केश्चिल्लग्नोपगतैः

एवंशशांकोपगतैः शुभग्रहैरुदयोपगतैर्वा अथवात्रिकोणजायार्थसुखास्पदस्थितैः त्रिकोणंनवपंचमेजायास्थानंसप्तमं अर्थस्थानंद्वि
तीयं सुखस्थानंचतुर्थं आस्पदस्थानंदशमं एतेषुत्रिकोणजायार्थसुखास्पदेषु यथासंभवंचंद्राल्लग्नाद्वाद्वयोर्वासमवस्थितैस्तथा पापकैः क्रू
रग्रहैश्चंद्राल्लग्नाद्वातृतीयलाभर्क्षगतैः तृतीयैकादशस्थानस्थैस्तैर्यथासंभवंद्वयोर्वास्थितैरविणासूर्येणयदिनिरीक्षितोदृष्टः शशीलग्नवाभव
ति यस्मादेवंयोगः सचदृश्यतेतदागर्भस्थः सुखीपुष्टिमान्भवति केचिद्गुरुणानिरीक्षितइतिपठंति तदयुक्तं यस्मात्सारावल्यामुक्तं होरेंदुयुतैः
सौम्यैस्त्रिकोणजायार्थसुखांबरस्थैर्वा पापैस्त्रिलाभयातैः सुखीचगर्भोनिरीक्षितोरविणा १० अथनिषिक्तस्यनिषेककालाज्जातस्यजन्मकालादु

ओजर्क्षेपुरुषांशकेषुबलिभिर्लग्नार्कगुर्विंदुभिः पुंजन्मप्रवदेत्समांशकगतैर्युग्मेषुतैर्योषितः
गुर्वर्कौविषमेनरंशशिसितौवक्रश्चयुग्मेस्त्रियंद्व्यंगस्थाबुधवीक्षणाच्चयमलौकुर्वंतिपक्षेस्वके ११

भयोरपिप्रश्नकालाद्वापुंस्त्रीविभागज्ञानंशार्दूलविक्रीडितेनाह ओजर्क्षेति ओजर्क्षेपुरुषांशकेष्विति लग्नमुदयलग्नं अर्कः आदित्यः गुरुर्जीवः इं
दुश्चंद्रः एतैर्लग्नार्कगुर्विंदुभिरोजर्क्षस्थैर्विषमराशिव्यवस्थितैर्नकेवलं यावद्विषमराशिव्यवस्थितैर्विषमनवांशगतैर्बलिभिश्चपुंसोजन्मवदेत् न
न्वत्रविषमनवांशग्रहणंनास्तिकथंव्याख्यातंविषमनवांशकगैरिति उच्यते पुरुषांशकेष्वितिवचनात्पुरुषराशीनामंशकेष्वित्यर्थः यएवंविषम
राशयस्तएवपुरुषराशयः समांशकगतैर्युग्मेष्विति तैरेवलग्नार्कगुर्विंदुभिर्युग्मेषुसमराशिषुव्यवस्थितैर्नकेवलंयावत्समांशकगतैर्युग्मराशि

नवांशकस्थैर्बलिभिश्चयोषितः स्त्रियोजन्मवदेत् अथैषांयथाभिहितानांलग्नग्रहाणामुभयविकल्पकानांबाहुल्यात्पुंस्त्रीनिर्देशः साम्येबलाधि
कत्वात् गुर्वर्कावििति गुरुर्जीवः अर्कआदित्यः एतावुभावपिविषमेविषमराशौगतौयत्रतत्रनवांशकस्थौनरंमनुष्यंकुरुतः बलग्रहणमप्यत्रा
नुवर्तते शशीचंद्रः सितःशुक्रः वक्रोंगारकः एतेयदिसबलाःयुग्मसमराशौगतायत्रतत्रनवांशकस्थास्त्रियंजनयंति द्व्यंगस्थाइति एत-
एवग्रहाद्व्यंगस्थायत्रतत्रराशौद्विशरीरनवांशकस्थाः बुधर्वाक्षणाश्चबुधदृष्यायमलौद्वौस्वपक्षेकुर्वंति स्वपक्षेआत्मीयपक्षे आत्मीयपक्षेपु
रुषनवांशकेस्त्रीनवांशकेचेत्यर्थः एतदुक्तंभवति चत्वारोद्विस्वभावामिथुनकन्याधन्विमीनाः तत्रमिथुनधन्विनौपुरुषांशकौक
न्यामीनौस्त्र्यंशकौ तेनयथासंभवंमिथुनधन्वंशगतावादित्यजीवौयदिबुधेनयत्रतत्रावस्थितेनदृश्येते तदायमलौद्वौपुरुषौवाच्यौ एवं
यथासंभवंकन्यामीनांशकगताः शशिशुक्रभौमाः यत्रतत्रावस्थितेनबुधेनदृश्यंते तदायमलेद्वेकन्येवाच्ये अथद्वावेववर्गौयथादर्शित-
स्थोबुधःपश्यति तदेकःपुरुषोद्वितीयाचकन्या नन्वत्रांशकग्रहणंनास्तितत्कथंव्याख्यातं द्विशरीरांशकेस्थितइति अनेनैवस्वल्पजा
तकेउक्तं बलिनौविषमेऽर्कगुरूनरंस्त्रियंसमग्रहेकुजेंदुसिताः यमलौद्विशरीरांशेष्विंदुजदृष्यास्वपक्षसमाविति अन्यथापुन
रुक्ततास्यात् ओजर्क्षेपुरुषांशकेष्वित्यनेनैवगतार्थत्वात् बलग्रहणमत्रानुवर्तनीयमिति ११ अथपुंजन्मयोगांतरमुपेंद्रवज्रयाह विहा
यलग्नमिति उक्तयोगाभावस्यावसरेनान्यथा आधानलग्नंपृच्छाकालिकंलग्नंवा लग्नंविहायत्यक्त्वासौरः शनैश्चरोलग्नाद्विषमर्क्षगतस्तृ
तीयपंचमसप्तमनवमैकादशस्थानानामन्यतमस्थः पुनर्जन्मकरःपुरुषजन्मकरोभवति प्रोक्तग्रहाणामिति प्रोक्तगृहाणांकथितयोगकर्तृ
णांग्रहाणांवीर्यबलमवलोक्यविचार्यप्रसूतौप्रसवकालेपुरुषोनरोंगनास्त्रीवावक्तव्या एतदुक्तंभवति यत्रपुरुषजन्मसंभवस्तत्रपुरुषोवा —

च्यः एवंस्त्रीयोगसंभवेस्त्रीवाच्या यत्रपुरुषजन्मयोग संभवः स्त्रीयोगजन्मसंभवश्चदृश्यतेतदायोयोगोबलवत्ग्रहाभिनिर्मितस्तद्वशात्पुंस्त्री जन्मवक्तव्यं १२ अथक्लीबजन्मयोगान्शार्दूलविक्रीडितेनाह अन्योन्यमिति शशीचंद्रः रविरादित्यः एतौशशिरवीयथाक्रमंयुग्मौजर्क्ष गतौसमविषमराशिस्थावन्योन्यंपरस्परंयदिपश्यतः समराशिस्थश्चंद्रोविषमराशिगतमर्कं पश्यत्यर्कः शशिनंपश्यतितदाक्लीबजन्मयोग एकः यद्यार्किसौम्यावपि आर्किः सौरः सौम्योबुधः एतावार्किसौम्यौयथाक्रमंयुग्मौजर्क्षगतौ अन्योन्यंयदिपश्यतस्तदाद्वितीयोयोगः व क्रोवासमगमिति वक्रोंगारकोविषमर्क्षगः समगसमराशिस्थोदिनेशंसूर्यंपश्यतिसूर्यश्चांगारकंपश्यति तदातृतीयोयोगः असमेचंद्रोद

विहायलग्नंविषमर्क्षसंस्थः सौरोपिपुनर्जन्मकरोविलग्नात् प्रोक्तग्रहाणामवलोक्यवीर्यंवाच्यःप्रसूतौपु –
रुषांगनावा १२ अन्योन्यंयदिपश्यतःशशिरवीयद्यार्किसौम्यावपि वक्रोवासमगंदिनेशमसमेचंद्रोदयौचेत्स्थि
तौ युग्मौजर्क्षगतावपींदुशशिजौभूम्यात्मजेनेक्षितौपुंभागेसितलग्नशीतकिरणाःस्युःक्लीबयोगाःस्मृताः १३

यौचेदिति चंद्रःशशीउदयोलग्नमेतावसमेविषमराशाववस्थितौभूम्यात्मजेनांगारकेणसमराशिगेनेक्षितौदृष्टौतदाचतुर्थयोगः युग्मौजर्क्षग तावपीति इंदुश्चंद्रः शशिजोबुधःएतौयथासंख्यंयुग्मौजर्क्षगतौसमविषमराशिगौभूमिजेनभौमेनयत्रतत्रावस्थितेनवीक्षितौदृष्टौतदापं चमोयोगः पुंभागइतिसितःशुक्रः लग्नंउदयलग्नंशीतकिरणश्चंद्रः एतेसितलग्न शीतकिरणाः यत्रतत्रराशौपुंभागेविषमनवांशकेव्य वस्थिताभवंति तदाक्लीबजन्मयोगःषष्ठः तथाचबादरायणः अन्योन्यंरविशशिनौविषमाविषमर्क्षगौनिरीक्ष्येते इंदुजरविपुत्रौवातथैवच

युग्मकंकुरुतः वक्रोविषमेसूर्यः समगश्चैवंपरस्परालोकात् विषमर्क्षेलग्नेंदूसमराशिगः कुजोवलोकयति बुधश्चंद्रौकुजदृष्टौविषमर्क्षसमर्क्षगौ
नथैवोक्तौ ओजनवांशकस्थालग्नेंदुसितास्तथैवोक्ताइति एतेयोगाः पूर्वयोगानामभावेवक्तव्याः तेषांयोगानामेतेषाञ्चसंभवेतेषामेवबल-
वत्वं १३ अधुनाद्वित्रिगर्भसंभवयोगान् शार्दूलविक्रीडितेनाह युग्मेचंद्रसितावित्ति चंद्रसितौशशिशुक्रौयुग्मेसमराशौव्यवस्थितौतथाते
नैवप्रकारेणज्ञारजीवोदयाः ज्ञोबुधः आरोंगारकः जीवोबृहस्पतिः उदयोलग्नं एतेसर्वेएवौजभवनेविषमराशौस्युर्भवेयुः एवमेतेमिथुनंकु
र्युः दारिकादारकस्य लग्नेंदूउदयचंद्रौसमगौयुग्मराशिव्यवस्थितौनृनिरीक्षितौनरग्रहेणयेनकेनचित् दृष्टौभवतस्तथापिमिथुनंगर्भ

युग्मेचंद्रसितौतथौजभवनेस्युर्ज्ञारजीवोदयाः लग्नेंदूनृनिरीक्षितौचसमगौयुग्मेषुवाप्राणिनः कु
र्युस्तेमिथुनंग्रहोदयगतान्द्व्यंगांशकान्पश्यतिस्वांशेज्ञेत्रितयंज्ञगांशकवशाद्युग्मंत्वमिश्रैःसमं १४

संस्थंवाच्यम् युग्मेषुवाप्राणिनः नएवपूर्वोक्ताज्ञारजीवोदयाः सर्वएवयुग्मेषुसमराशिषुस्थिताः प्राणिनोबलिनोभवंति तथापिमिथुनंकुर्युः
ग्रहोदयगतानित्यादि ग्रहाः सर्वएवद्व्यंगांशकेषुद्विस्वभावनवांशकेषुगताः प्राप्ताः उदयोलग्नंचद्व्यंगांशकेषुगतः तान्ग्रहोदयगतान्द्व्यं-
गांशकान् स्वांशेस्वनवांशकस्थेज्ञेबुधेपश्यतिसतितदात्रितयंवक्तव्यं तत्रायंविशेषः ज्ञगांशकवशाद्युग्मंतुइतिज्ञोबुधोगतोव्यवस्थितो
यस्मिन्नवांशकेस्थितः तद्वशाद्युग्मं बुधोयस्मिन्नवांशकेव्यवस्थितः सयल्लिंगांशकस्तल्लिंगंतत्रगर्भेयुग्मंवक्तव्यं एकस्तद्विपरीतः एतदु
क्तंभवति मिथुनांशकस्थोबुधोयदाग्रहोदयगतान् द्व्यंगांशकान्पश्यति तदागर्भेदारकद्वयंदारिकाचैकावक्तव्या अथोकन्यानवांशकस्थो

बुधोद्वंगांशकव्यवस्थितान् ग्रहोदयान्पश्यति तदा गर्भे दारिकाद्वयं एकं च दारकं वक्तव्यं अभिश्रैः सममिति तैर्ग्रहोदयबुधैरमिश्रस्थितैर्द्वि
स्वभावसमानलिंगस्थितैस्त्रिनयं समम् एकलिंगवक्तव्यम् एतदुक्तं भवति मिथुननवांशकव्यवस्थितो बुधो मिथुनधन्व्यंशकव्यवस्थितान् ग्रहो
दयान्पश्यति तदा गर्भे दारकत्रितयं वक्तव्यं अथ कन्यांशकव्यवस्थितो बुधः कन्यामीनांशकव्यवस्थितान् ग्रहोदयान्पश्यति तदा गर्भे दारिकात्रित
यं वाच्यमिति तथा च सारावल्याम् समराशौ शशिसितयोर्विषमे गुरुवक्रसौम्यलग्नेषु योगेऽस्मिन् गर्भगतं नूनं मिथुनं तु विज्ञेयम्
लग्नेंदू वासमगौ पुंग्रहदृष्टौ च मिथुनजन्मकरौ उदयलग्नज्ञवक्रगुरवो बलिनः समराशिगास्तथैवोक्ताः द्विशरीरांशकयुक्तान् ग्रहान्
विलग्नं च पश्यतीं दुस्सुते कन्यांशे द्वे कन्ये पुरुषश्चानिषिच्यते गर्भे मिथुनांशे कन्यैका द्वौ पुरुषौ त्रितयमेवं स्यात् मिथुनधनराशिग

धनुर्धरस्यांत्यगते विलग्ने ग्रहैस्तदंशोपगतैर्बलिष्ठैः ज्ञेनार्किणा वीर्ययुतेन दृष्टे संति प्रभूता अपि कोशसंस्थाः १५

तान् ग्रहान्विलग्नं च पश्यतीं दुस्सुतः मिथुनांशस्थश्च यदा पुरुषत्रितयं तदा गर्भे कन्यामीनांशकस्थान्विहगान्उदयं युवति भागगताः पश्यति शी
तगुनतयः कन्यात्रितयं तदा गर्भे १४ अधुनात्यधिकगर्भसंभवयोगज्ञानमुपजातिकयाह धनुरिति धन्विलग्ने धनुर्धरांशके वोदयलग्नमुपग
ते धनुर्धरस्य धनुषोंऽत्यगगते विलग्ने धन्व्यंशके चोपगते ग्रहैः सर्वैरेव तदंशोपगतैर्यत्रतत्रराशौ धन्विनवांशकस्थैर्न केवलं यावद्बलिष्ठैर्वीर्यवद्भि
स्तस्मिंश्च लग्ने ज्ञेनार्किणा च दृष्टे ज्ञेन बुधेन आर्किणा शनैश्चरेण च वीर्ययुतेन बलवता दृष्टे वलोकिते प्रभूता बहवः कोशसंस्था जरायुवेष्टित
विग्रहा गर्भे संति भवंतीति पंचसप्तदश यावत् पूर्वमुक्तं मासाधिपतौ निपीडिते तत्कालं स्रवणं समादिशेदिति १५ तदधुना गर्भस्य मासा-

धिपानन्नोटकेनाह कललइति सिताद्याग्रहागर्भस्यप्रथममासात्प्रभृतिकललादीनिभवंतिवर्तयंति तद्यथा गर्भस्यप्रथमेमासिकललंभवति शुक्रशोणितेघनेसंमिश्रीभूते तत्रगर्भस्यतस्मिन्मासेसितः शुक्रोधिपतिः द्वितीयेघनताकाठिन्यंभवति तत्रतस्यकुजोंगारकोभौमोधिपतिः तृतीयेंकुरोत्पत्तिर्हस्तायवयवजन्मतत्रजीवोबृहस्पतिरधिपतिः चतुर्थेस्थिसंभवः तत्रसूर्योरविरधिपतिः पंचमेचर्मसंभवस्तत्रचंद्रोधिपतिः षष्ठेंगजसंभवो लोमजन्मतत्रार्किःसौरोधिपतिःसप्तमेचेतनतासंभवोभवतिचेतनतास्वभावःतत्रबुधोधिपतिःबुधमासात्परतोयेन्येशेषामासास्तेगर्भस्यशनोद्वेगप्रसवक्र-रास्तेषुचोदयपतिचंद्रसूर्यनाथाःस्वामिनः क्रमशोगदिताः उक्ताः तत्राष्टमेमासिगर्भस्थोजंतुरशनंकरोति मात्राभुक्तंपीतंरसादिः तस्या

कललघनांकुरास्थिचर्मांगजचेतनताः सितकुजजीवसूर्यचंद्रार्किबुधाःपरतः उद
यपचयसूर्यचंद्रनाथाःक्रमशोगदिताः भवंतिशशभाशुभंचमासाधिपतेःसदृशं १६

नाभिलग्ननालिनंसंक्रमतेतत्रगर्भाधानलग्नाधिपतिर्योग्रहःसप्तमासाधिपतिः नवमेगर्भस्थस्योद्वेगोभवति तत्रचंद्रोधिपतिर्भवति दशमेगर्भस्य प्रसवोप्रसूतिर्भवति तत्रसूर्योरविरधिपतिः तथाचस्वल्पजातके कललघनावयवास्थित्वग्रोमस्मृतिसमुद्भवाः क्रमशः मासेषुशुक्रकुज जीवसूर्यचंद्रार्किसौम्यानाम् प्रशनोद्वेगप्रसवाःपरतोलग्नेशचंद्रसूर्याणामिति अत्रप्रथमद्वितीय मासाधिपयोर्यवनेश्वरेणसहमतभे-दः तथाचतद्वाक्यम् कुजास्फुजिज्जीवरवींदुसौरशशांकलग्नेंदुदिवाकराणाम् मासाधिपत्यप्रभवोनचैषांजयोपघातैर्ग्रहवद्भवंति आद्येतु मासेकललंद्वितीयेपेशिस्तृतीयेपिभवंतिशाखाः १ अस्थीन्यथस्नायुशिराश्चतुर्थेमज्जात्वचर्माण्यपिपंचमेतु षष्ठेत्वसृग्रोमनखोपक्रन्व

चेतः स्थिताः सप्तममासचेष्टाः तृष्णाशनास्वादनमष्टमेस्यात्पूर्वापरार्थानवमेरतिश्च स्रोतोभिरुद्घाटितपूर्णदेहोगर्भोर्कमासेदशमेप्रसूते आ
चार्यस्यबहुमतमासानामभिमतमिनिभवति शुभाशुभंच मासाधिपतेः सदृशंगर्भस्थस्यमासाधिपतिसदृशं शुभमशुभंफलंभवति
एतदुक्तंभवति आधानकालेयोग्रहोनिपीडितोभवतितन्मासिगर्भस्यपतनंकलुषेमंदरश्मौ विवर्णेपीडनंनिर्मलेशुजालसंपन्नेबलवतिपुष्टि-
रिति तथाचसूक्ष्मजातके कलुषैःपीडापतनंनिपीडितैर्निर्मलैःपुष्टिरिति अथचान्यैःशास्त्रकारैर्विशेषउक्तःतत्किंचित्प्रदृश्यते तथाचसा
रावल्याम् तत्रशुभाशुभमिश्रैः कर्मभिरधिवासितात्विपर्यन्तोतः गर्भावासेनिपतनिसंयोगेशुक्रशोणितयोः मिथुनस्यमनोभावोयादृक्

त्रिकोणगेज्ञेविबलैस्तथापरैर्मुखांघ्रिहस्तैर्द्विगुणास्तदाभवेत् अ
वाग्गवींदावशुभैर्भसंधिगैःशुभेक्षितेश्चेत्कुरुतेगिरंचिरात् १७

भवलस्यसंभवति श्लेष्मादिभिश्चदोषैस्तत्तुल्यगुणोनिषिक्तस्य यादृक्पश्यतिसौम्यस्तत्तुल्यबलगुणंसुतंसमाधत्ते पितृजननीसादृश्यंरवेःश
शांकस्यबलयोगात् सुबोधमेतत् १६ अथाधिकांगमूकचिरलब्धगिरांसंभवयोगान्वंशस्थेनाह त्रिकोणगेति ज्ञेबुधेत्रिकोणगेलग्नान्न
वमस्थेपंचमस्थेवातस्माद्बुधादपरैरन्यैःसर्वैर्ग्रहैर्यत्रतत्रावस्थितैर्विबलैर्वीर्यरहितैर्मुखांघ्रिहस्तैर्द्विगुणोगर्भस्थोवाच्यः द्विशिरश्चतुष्पाच्चतु
र्भुजइत्यर्थः त्रिकोणगेज्ञेइत्यत्रकेचिन्मूलत्रिकोणगेबुधेकन्यागतइत्याहुः तच्चायुक्तं यस्माद्भगवान्गार्गिः बलहीनैर्ग्रहैःसर्वैर्नवपंचमगेबुधे
द्विगुणांघ्रिशिरोहस्तोभवत्येकोदरस्तथा १ अवागिति गविवृषेस्थितेइंदौचंद्रेःशुभैःपापैर्भसंधिगैःकर्कटवृश्चिकमीनानामंत्यनवांश

कस्थैर्यथासंभवंतदाअवाङ्मूकोगर्भस्थोवाच्यः शुभेक्षितइतिचेच्छब्दोप्यर्थे एवंविधेयोगेयदिशुभेक्षितः सौम्यग्रहदृष्टश्चंद्रोभवतितदाजा
तस्यचिराद्बहुनाकालेनगिरंवाचंकुरुते अर्थादेव पापवीक्षितेवाग्धानइति एवंयोगेमिश्रग्रहवीक्षितेयदासौम्याबलिनस्तदाचिरेणकालेन
लब्धवाग्भवतियदापापाबलिनस्तदानैवेति अत्रचभगवान्गार्गिः कुलीरालिझषांतस्थैः पापैश्चंद्रे वृषोपगे मूकःपापेक्षितेःसौम्यैश्चिरेण
लभतेगिरं मिश्रदृष्टैर्ग्रहैर्हीनैर्मूकोबालश्चवाक्किरादिति १७ अधुनासदन्तकुब्जजडजन्मयोगान्मंदाक्रांतयाह सौम्येति रविजःशनैश्चरः
रुधिरोंगारकः यत्रतत्रराशौशनैश्चरांगारकौसौम्यर्क्षांशेबुधनवांशकेमिथुनांशकेकन्यांशकेवाभवतः अथवाबुधर्क्षेमिथुनकन्ययोरन्यतमे

सौम्यर्क्षांशेरविजरुधिरौचेत्सदंतोत्रजातःकुब्जःस्वर्क्षेशशिनितनुगेमंदमाहेयदृष्टे पंगु-
र्मीनेयमशशिकुजैर्वीक्षितेलग्नसंस्थेसंधौपापेशशिनिचजडःस्यान्नचेत्सौम्यदृष्टः १८ ॥

राशौस्थितौभवतः चेच्छब्दोयद्यर्थे यद्येवंतदात्रास्मिन्योगेसदंतोदंतसहितोगर्भस्थोवाच्यः केचित्सौम्यर्क्षांशेमिथुनेमिथुनांशकेकन्यायांक
न्यांशकेचेतीच्छंति ऋक्षांशयोर्युगपद्ग्रहणात् अंशशब्देनकेवलेनैवसिद्धिःस्यात्तदृक्षग्रहणमतिरिच्यतइति एवंविधेयोगेगर्भस्थः सदं
तोभवतिजातोवा कुब्जःस्वर्क्षइति शशिनिचंद्रेस्वर्क्षेआत्मीयराशौकर्कटस्थितेतथाभूतेचतनुगतेतथाभूतेमंदमाहेयदृष्टे मंदेनशनैश्च
रेणमाहेयेनांगारकेणचदृष्टेवलोकितेचंद्रेगर्भस्थोकुब्जोवाच्यः पंगुर्मीनइति मीनेलग्नसंस्थेयमशशिकुजैः दृष्टेपंगुर्गर्भस्थोभवति यमः
शनैश्चरः शशिश्चंद्रः कुजःभौमः एतैर्वीक्षितेदृष्टेपंगुःपादविकलोगर्भस्थोवाच्यः संधौपापेइति पापेआदित्यकुजसौराणामन्यतमेशशि

निचचंद्रेसंधौकुर्कटवृश्चिकमीनांत्यनवांशगतेर्यथासंभवंगर्भस्थोजंतुर्जडः श्रोत्रेंद्रियहीनोवाच्यः नचेत्सौम्यदृष्टइति एतेयोगकर्तारोग्रहायथादर्शि
तानचेद्यदिसौम्यैः शुभग्रहैर्दृष्टानभवंति नदेतद्योगचतुष्टयंपूर्णवक्तव्यं सौम्यैर्बलिभिर्निरीक्षितायोगानभवंति मध्यबलैर्हीनबलैर्वादृष्टास्तदा
असमग्रफलाभवंतीति १८ अधुनावामनहीनांगौदोधकेनाह सौरशशांकइति मकरांत्यविलग्ने मकरस्यांत्यनवांशकेविलग्नस्थे नवमनवां
शकोदयमानःसचमकरस्यभवतीत्यर्थः तस्मिंश्चसौरशशांकदिवाकरदृष्टे सौरःशनैश्चरः शशांकश्चंद्रः दिवाकरःसूर्यः एतैरवलोकितेर्वा
मनकोगर्भस्थोवाच्यः धीनवमोदयगेरिति अत्रकेचिदेवंव्याचक्षते यदालग्नेद्वितीयेद्रेक्काणोदयोभवति तदातस्यपंचमराशिसंबंधित्वाद्धीद्रे

सौरशशांकदिवाकरदृष्टे वामनकोमकरांत्यविलग्ने धी
नवमोदयगेश्चदृक्काणेःपापयुते२भुजांघ्रिशिरःस्यात् १९

क्काणइत्याख्यातस्मिन्द्वितीयेद्रेक्काणेपा पग्रहयुतेउदयमनुप्रासेनवमेतस्मिन् सौरशशांकदिवाकरदृष्टेगर्भस्थोऽभुजोभुजहीनोवाच्यःए
वंयदालग्नेतृतीयस्यद्रेक्काणस्यउदयोभवति तदातस्यनवमराशिसंबंधित्वान्नवमद्रिक्काणइत्याख्या तस्मिन्नुदयेपापयुतेसौरशशांकदिवाक
रदृष्टेऽनंघ्रिःपादहीनोगर्भस्थोवाच्यः एवंप्रथमद्रेक्काणस्यलग्नसंबंधित्वादुदयद्रेक्काणइत्याख्यातस्मिन्नुदयगतेपापयुतेसौरशशांकदिवा
करदृष्टेऽशिराःशिरहीनोगर्भस्थोवाच्यः एतेषुयोगेषुसौरशशांकदिवाकराणांदर्शनयोगात्पापयुक्तइति केवलेनांगारकेणयुक्तेयोगोभवति
अन्येत्वन्येषांनवमोदयगेर्द्रेक्काणेःपापयुतेःकेवलमेवाभुजांघ्रिशिरसांसंभवंव्याचक्षते सौरशशांकदिवाकरदृष्टइत्यस्यानुवृत्तिंनेच्छंति अ

: विभुजोवानंध्रिर्वाविशिरावेति अन्येएवंव्याचक्षते य
एवतत्त्रेष्काणत्रयंयदिपापयुतंभवतितदाभुजहीनो
थ एवएतद्रेष्काणत्रयंयदापःपयुतंभवति तदापादहीनोग-
एतद्रेष्काणत्रयंयदिपापयुतंभवतितदाशिरोविहीनोग-
...न्येनगर्भस्थस्यसंभवमाहुः वयंपुनर्वाब्रूमः निषेक
विभुजोभवति एवंनवमेस्थानेद्रेष्काणोनवमद्र

. सौम्यैःसबुद्धुदलोचनः

शांकदिवाकरदृष्टस्त्भवति तदाअनंध्रिर्भवति तथानिषेककालेल
दाअशिरागर्भस्थोवाच्यः एषैवव्याख्यासाध्वी यस्माद्भगवा
पंचमेबाहुवर्जितं १ विपदंनवमस्थानेयदिसौम्यैर्नवीक्षितइति
...तकःस्याच्छनिरविचंद्रैर्वदेद्गर्भे १९ अथविकलजन्मज्ञा
संयुतेतथाभूतेकुजार्किनानिरीक्षितेभौमसौराभ्यांदृष्टेनयन

रहितो भवति नेत्ररहितोंधोगर्भस्थोवा [illegible] युक्ते सौरेंगारकेणदृष्टेदक्षिणाक्षिकाणः एवंसिंहलग्नेकेवले नचंद्रेणयुक्तेसौरेंगारकेणदृष्टेवामाक्षि [illegible] वन इति तस्मिन्नेवसिंहलग्नेऽर्कचंद्राभ्यांयुक्तेसौम्यासौम्यैः शुभ पापग्रहैर्दृष्टेगर्भस्थः सबुद्बुदलोचनः पु [illegible] तमयुक्ते प्राग्वत्पुष्पिनाक्षित्वंवाच्यं व्ययगृहगतइति निषेककाल लग्नाज्जन्मलग्नाद्वायस्यचंद्रमाव्ययगृहगत [illegible] स्यवामंचक्षुर्हिनस्तिवामाक्षिकाणः सभवतीत्यर्थः एवंरविरादित्यो लग्नाद्द्वादशोऽपरंदक्षिणंचक्षुर्हिनस्ति अ [illegible] गाइति यएतेयोगाः प्रागभिहितास्त्रिकोणगेज्ञे इत्यादिनाग्रंथेनशुभाशुभफ

व्ययगृहगतश्चंद्र [illegible] स्यपरंरविर्नशुभगादिता योगायाप्याभवंतिशुभेक्षिताः २०

लदास्तेषांसर्वेषामेवयोगानांयदायोगक [illegible] ग्रहैः शुभग्रहैः सौम्यग्रहैः दृष्टाभवंति तदानेयोगायाप्याभवंति पूर्णंयथोक्तंफलंनप्रयच्छं ति किंतुकिंचित्प्रयच्छंतीत्यर्थः २० [illegible] थप्रश्नआधानकालेयोगवशात्प्रसवकालज्ञानंवसंततिलकेनाह तत्कालमिंदुसहितेति तत्का लमिंदुः तत्कालेप्रश्नकाले आधानकालेवायस्मिन्राशौचंद्रमावर्ततेतत्रचयस्मिन्द्वादशभागेव्यवस्थितः सतत्कालमिंदुसहितोद्वि रसांशकः केचित्तुतत्कालिकेंदुसहितोद्विरसांशकइतिपठंति तत्कालिकेंदुनायावत्संख्याद्वादशभागसहितः तत्तुल्यस्तावत्संख्योभे षादौगणनयायोराशिस्तत्रस्थेचंद्रमसिपुरतोऽग्रतोदशमेमासिगर्भस्यप्रसवोवाच्यइतिकेचित् तथाचसारावल्याम् यस्मिन्द्वाद

न्येविभुजादिसंभवेयथासंख्यंत्यक्त्वा द्रेष्काणत्रयेपिप्रतिद्रेष्काणंतदुद्भवविकल्पमाहुः विभुजोवानंघ्रिर्वाविशिरावेति अन्येएवंव्याचक्षते य
थालग्नेयदाप्रथमद्रेष्काणोदयोभवति तदापंचमराशौप्रथमद्रेष्काणोनवमोपिप्रथमएवतत्त्रद्रेष्काणत्रयंयदिपापयुतंभवतितदाभुजहीनो
गर्भस्थोवाच्यः अथलग्नेद्वितीयद्रेष्काणोदयोभवति तदापंचमनवमयोरपिद्वितीयएवएतद्रेष्काणत्रयंयदिपापयुतंभवतितदाभुजहीनो
गर्भस्थोवाच्यः अथलग्नेतृतीयद्रेष्काणोदयोभवतितदापंचमनवमयोरपितृतीयएवएतद्रेष्काणत्रयंयदापापयुतंभवति तदापादहीनोग-
र्भस्थोवाच्यः अत्राप्यन्येयथासंख्यंत्यक्त्वात्रिप्रकारेपि योगेभुजांघ्रिशिरोहीनानांविकल्पेनगर्भस्थस्यसंभवमाहुः वयंपुनर्वाब्रूमः निषेक
कालेयः पंचमराशौयोद्रेष्काणः सयद्यंगारकेणयुक्तः सौरशशांकदिवाकरदृष्टश्चभवति तदाविभुजोभवति एवंनवमेस्थानेद्रेष्काणोनवमद्रे

रविशशियुतेसिंहेलग्नेकुजार्किनिरीक्षितेनयनरहितःसौम्यासौम्यैःसबुद्बुदलोचनः

ष्काणः तथानिषेककालेनवमराशौयोद्रेष्काणःसयद्यंगारकेणयुक्तः सौरशशांकदिवाकरदृष्टश्चभवति तदाअनंघ्रिर्भवति तथानिषेककालेल
ग्नस्योद्रेष्काणःसयद्यंगारकेणयुक्तःसौरशशांकदिवाकरदृष्टश्चभवतितदाअशिरागर्भस्थोवाच्यः एषैवव्याख्यासाध्वी यस्माद्भगवा
न्गार्गिः लग्नद्रेष्काणगोभौमः सौरसूर्येंदुवीक्षितः कुर्याद्विशिरसंतद्वत्पंचमेबाहुवर्जितं १ विपदंनवमस्थानेयदिसौम्यैर्नवीक्षितइति
तथाचसारावल्याम् भौमयुतोद्रेष्काणस्त्रिकोणलग्नेषुसंदृष्टोविभुजांघ्रिमस्तकःस्याच्छनिरविचंद्रैर्वदेद्गर्भे १९ अथविकलजन्मज्ञा
नार्थंहरण्याप्याह रविशशियुतेति सिंहेलग्नेरविशशियुतेअर्कचंद्राभ्यांसयुतेतथाभूतेकुजार्किनानिरीक्षितेभौमसौराभ्यांदृष्टेनयन

राहितोभवति नेत्ररहितोंधोगर्भस्थोवाच्यः अर्थादेवकेवलेसिंहलग्ने ऽर्केणयुक्ते सौरेंगारकेणदृष्टेदक्षिणाक्षिकाणः एवंसिंहलग्नेकेवले
नचंद्रेणयुक्तेसौरेंगारकेणदृष्टेवामाक्षिकाणः सौम्यासौम्यैः सबुद्बुदलोचनइति तस्मिन्नेवसिंहलग्नेऽर्कचंद्राभ्यांयुक्तेसौम्यासौम्यैःशुभ
पापग्रहैर्दृष्टेगर्भस्थः सबुद्बुदलोचनः पुष्पिताक्षोवाच्यः अत्राप्येकतमयुक्तेप्रागवत्पुष्पिताक्षित्वंवाच्यं व्ययगृहगतइति निषेककाल
लग्नाज्जन्मलग्नाद्वायस्यचंद्रमाव्ययगृहगतोद्वादशस्थोभवति तस्यवामंचक्षुर्हिनस्तिवामाक्षिकाणः सभवतीत्यर्थः एवंरविरादित्यो
लग्नाद्वादशोऽपरंदक्षिणंचक्षुर्हिनस्ति अशुभगदितायोगाइति यएतेयोगाः प्रागभिहितास्त्रिकोणगेज्ञेइत्यादिनाग्रंथेनशुभाशुभफ

व्ययगृहगतश्चंद्रोवामंहिनस्त्यपरंरविर्नशुभगदितायोगायाप्याभवंतिशुभेक्षिताः २०

लदास्तेषांसर्वेषामेवयोगानांयदायोगकर्तारोग्रहाः शुभग्रहैः सौम्यग्रहैः दृष्टाभवंति तदातेयोगायाप्याभवंति पूर्णंयथोक्तंफलंनप्रयच्छं
ति किंतुकिंचित्प्रयच्छंतीत्यर्थः २० अथप्रश्नाधानकालेयोगवशात्प्रसवकालज्ञानंवसंततिलकेनाह तत्कालमिंदुसहितेति तत्का
लमिंदुः तत्कालेप्रश्नकाले आधानकालेवायस्मिन्राशौचंद्रमावर्ततेतत्रचयस्मिन्द्वादशभागेव्यवस्थितः सतत्कालमिंदुसहितोद्वि
रसांशकः केचित्तुतत्कालिकेंदुसहितोद्विरसांशकइतिपठंति तत्कालिकेंदुनायावत्संख्याद्वादशभागसहितः तत्तुल्यस्तावत्संख्योमे
षादौगणनयायोराशिस्तत्रस्थेचंद्रमसिपुरतोऽग्रतोदशमेमासिगर्भस्यप्रसवोवाच्यइतिकेचित् तथाचसारावल्याम् यस्मिन्द्वाद

शभागेगर्भाधानेव्यवस्थितश्चंद्रः तत्तुल्यदेशेप्रसवोगर्भस्यसमादिशेत्याज्ञः १ अन्येपुनरेवंव्याचक्षते आधानकालेयत्रराशौचंद्रमाव्य-
वस्थितस्तत्रयावत्संख्योद्वादशभागोवर्तते तस्माद्वादशभागराशेस्तावत्संख्योयएवपुरतोराशिस्तत्रस्थेचंद्रमसिदशमेमासिप्रसवोव-
क्तव्यः एषैवसाध्वीव्याख्या यस्माद्भगवान्गार्गिः यावत्संख्येद्वादशांशेशीतरश्मिर्व्यवस्थितः तत्संख्योयस्ततोराशिर्जन्मेंदुस्तद्गतोव
देत् १ अत्रापिनक्षत्रानयनेयमनुपातोपायः यदिचंद्राक्रांतद्वादशभागप्रमाणेनसकलचंद्रराशिरष्टादशशतलिप्ताप्रमाणंलभ्यते
तदनेनभुक्तद्वादशराशिप्रमाणेनकिमितिलब्धंचंद्रराशिभुक्तंलभ्यते ततोष्टशतलिप्तापरिकल्पनयानक्षत्रमूह्यं अत्रापिदिनरात्रि

तत्कालमिंदुसहितोद्विरसांशकोयस्तत्तुल्यराशिसहितेपुरतःशशांके या
वानुदेतिदिनरात्रिसमानभागस्तावद्गतेदिननिशोःप्रवदंतिजन्म ॥२१ ॥

कालज्ञानमाह यावानुदेतिदिनरात्रिलग्नाः पूर्वंव्याख्याताः गोजाश्विककर्किमिथुनाइत्यादिआधानकालेप्रश्नकालेवायल्लग्नंतस्ययःअविभा-
गः दिनसंज्ञोरात्रिसंज्ञो वायावानुदेतिस्वमानात्यावत्कालभागोगतस्तावत्येवदिननिशोःस्वमानाद्गतेकालेजन्मभविष्यतीतिवाच्यमेवं
दिनस्यरात्रेर्वागतकालंबुध्वाप्रसवकालेलग्नंहोराद्रेक्काणनवांशकद्वादशभागत्रिंशांशकावाच्या अन्येप्रवदंतिकथयंति तेषांतद्वाक्यंसा
रावल्यां तत्कालेदिवसनिशासंज्ञःसमुदेतिराशिभागोयः यावानुदयस्तावान्वाच्योदिवसस्यरात्रेर्वा इत्याधानेप्रथमंसूतिकालस्तुनिश्चि
तंकृत्वा जातकविहितंचविधिंविचिंतयेत्तत्रगणितज्ञः २१ अधुनाधृतस्यगर्भस्यवर्षत्रयवर्षद्वादशज्ञानंमालिन्याह उदयतीति मृदोः

सौरस्य भांशो मृदुभांशो निषेककाले यस्य तस्य लग्नस्योदये मृदुभांशे शनैश्चरराशिनवांशके मृगांशके कुंभांशके वोदय इति तथाभूते तस्मादेव लग्नात्मंदे शनैश्चरे तत्काले सप्तमस्थे द्यूनगते एवंविधे योगे यदि निषेको आधानं भवति तदा थतस्य गर्भस्याब्दत्रयेण वर्षत्रयेण सूतिकायाः प्रसवो वक्तव्यः शशिनीति एष एव विधिर्यदा शशिनि चंद्रे भवति तदा द्वादशेऽब्दे द्वादशे वर्षे सूतिः प्रसवं कुर्यात् एतदुक्तं भवति यस्य तस्य लग्नस्योदये यदा कर्कटांशकोदयो भवति तस्माल्लग्नात्सप्तमश्चंद्रो भवति तदा धृतस्य गर्भस्य द्वादशेऽब्दे प्रसवो वाच्यः निगदितमिहेति इहास्मिन्नाधानाध्याये आधानकालयोगवशात् यथा हीनाधिकमासादीनां गर्भसंभवति तथा प्रसूतिकालेऽपि ताहग्योगवशात्तथाभिधानामेवज-

उदयति मृदुभांशे सप्तमस्थे च मंदे यदि भवति निषेकः सूतिरब्दत्रयेण शशिनि तु विधिरेष द्वादशेऽब्दे प्रकुर्यान्निगदितमिह चिंत्यं सूतिकालेऽपि युक्त्या २२ इति निषेकाध्यायः स॰

न्म वक्तव्यम् पितृमातृपितृव्यमातुलमातृस्वसॄणामपि शुभाशुभं जन्मकालवशात्तदनंतरमपि वक्तव्यं युक्त्येति यत्र संभवति तत्र वक्तव्यं यथा गर्भस्रावादि गर्भप्रसवकालनिर्देशादि च एवमाधानकालात्प्रसवकालाच्च यथैवोद्देशः कृतः तथा प्रश्नकालादपि वक्तव्यः उक्तं च जन्माधाने प्रश्नकाले वेति इति श्रीभट्टोत्पलविरचितायां बृहज्जातकविवृतौ निषेकाध्यायश्चतुर्थः अथातो जन्मविधिर्नामाध्यायो व्याख्यायते तत्रादावेव पितुः सन्निधावसन्निधौ वा जातमित्यनुष्टुभाह पितुर्जातमिति इंदौ चंद्रे प्रसवलग्नमपश्यति सति पितुः परोक्षस्य जनकस्यासन्निधौ जातः तत्र पितुरसन्निधाने स्वदेशपरदेशस्थितिज्ञानमाह विदेशस्थस्येति दिवाकरे सूर्ये चरभे चरराशिस्थि

तेमध्याद्भ्रष्टेमध्याद्दशमस्थानाद्भ्रष्टेपतिते एकादशद्वादशस्थेनवमाष्टमस्थानस्थेपितुर्विदेशस्थस्य अन्यदेशगतस्यजातः चंद्रमभिप्रस
बलग्नमपश्यत्येषयोगोनान्यथेति चंद्रेप्रसबलग्नमपश्यति अर्केस्थिरराशिस्थेमध्याद्भ्रष्टेस्वदेशस्थस्यपितुःपरोक्षेजातः अस्मिन्ने
वयोगेद्विस्वभावस्थेर्केमध्याद्भ्रष्टेस्वदेशपरदेशयोर्मध्यापस्थितस्यपरोक्षेजातः मार्गमध्येइत्यर्थः अर्थादेवचंद्रेप्रसबलग्नमपश्य
त्यर्केचरराशिस्थेस्थिरराशिस्थे वाद्विस्वभावराशिस्थेवामध्याद्भ्रष्टे पिवापितुःस्वदेशस्थस्यैव परोक्षेसन्निधौजातइति वक्तव्यम् तथा-
चसारावल्याम् होरामनीक्ष्यमाणोपितरिनगेहस्थिते शशिनिजातः मेषूरणात्च्युतेवाचरगेभानोविदेशगते १ अथान्यानपियोगानन्नुष्टु

पितुर्जातःपरोक्षस्यलग्नमिंदावपश्यति विदेशस्थस्यचरभेमध्याद्भ्रष्टेदिवाकरे १ उद-
यस्थेपिवामंदेकुजेवास्तसमागते स्थितेवांतःक्षपानाथेशशांकसुतशुक्रयोः २

भाह उदयस्थइति मंदेसौरेउदयस्थेलग्नगतेपितुःपरोक्षस्यजातः वाशब्दःप्रकाराय अथवाकुजेभौमेजन्मलग्नादस्तंसप्तमंस्थानंसमा
गतेप्राप्तेपितुःपरोक्षस्यजातइति स्थितेवांतइति क्षपानाथेचंद्रेशशांकसुतशुक्रयोर्मध्यस्थेशशांकसुतोबुधः शुक्रोभार्गवः अनयोर्मध्यस्थि
तेचंद्रेचंद्राद्देकोद्वादशेन्योद्वितीये अथवैकस्मिन्राशौमध्यभागेषुचंद्रःस्थितः आद्यंतभागयोर्बुधशुक्रौतथापिमध्यस्थः एवंविधेयोगेपितुः
परोक्षस्यजातः तथाचस्वल्पजातके चंद्रेलग्नमपश्यतिमध्येवासौम्यशुक्रयोश्चंद्रे जन्मपरोक्षस्यपितुर्यमोदयेवाकुजेचास्तेइति २

अधुनासर्पवेष्टितजन्मज्ञानंचानुष्टुभाह शशांकेति वृश्चिकेशोभौमः वृश्चिकस्वामीत्यर्थः शशांकेचंद्रेवृश्चिकेशत्रिभागगेभौमद्रेष्काणस्थेचंद्रेन
त्रभौमद्रेष्काणः मेषप्रथमः कर्कटेद्वितीयः सिंहेतृतीयः वृश्चिकेप्रथमः धनेद्वितीयः मीनेतृतीयः एषामन्यतमस्थस्यचंद्रमसः शुभैः शुभग्रहैः
स्वायस्थितैर्द्वितीयैकादशास्थानस्थितैः सर्पउरगोजातइत्येवोक्तं पापलग्नेति एवंपापग्रहसंबंधिलग्नोदयेयदाभौमद्रेष्काणोभवति तत्रपापल-
ग्नेभौमद्रेष्काणः मेषप्रथमः कर्कटेद्वितीयः सिंहेतृतीयः वृश्चिकेप्रथमः धनुषिद्वितीयः मीनेतृतीयः एषामन्यतमस्योदयेलग्नाद्यदिशुभग्रहैर्द्व्ये
कादशास्थैस्तद्वेष्टितः सर्पवेष्टितोजंतुर्जातइतिवक्तव्यं अन्येपुनरेवंव्याचक्षते चंद्रेपापलग्नेवाभौमद्रेष्काणस्थेतस्मादेवशुभग्रहैः स्वायस्थितैः

शशांकेपापलग्नेवावृश्चिकेशत्रिभागगे शुभैःस्वायस्थितैर्जातःसर्पस्तद्वेष्टितोपिवा ३
चतुष्पदगतेभानौशेषैर्वीर्यसमन्वितैः द्वितनुस्थैश्चयमलौभवतःकोशवेष्टितौ ४

विकल्पेनसर्पोवासर्पवेष्टितोवाजातइतिवक्तव्यम् अत्रपूर्वव्याख्यासाध्वी यस्माद्भगवान्गार्गिः भौमद्रेष्काणगेचंद्रेसौम्यैरायधनस्थितैः सर्पस्तद्वे
ष्टितस्तद्वत्पापलग्नेविनिर्दिशेत् १ तथाचसारावल्याम् भौमद्रेष्काणगेचंद्रेलग्नेवासंस्थितेवतेज्जातम् द्व्येकादशगैः सौम्यैरहिवेष्टितकोभुजंगोवा
३ अथैकजरायुवेष्टितयोर्जन्मज्ञानमनुष्टुभाह चतुष्पदेति भानौसूर्येचतुष्पद्राशिगतेमेषवृषसिंहधन्विपरार्धमकरपूर्वार्धानामन्यतमस्थेशे
षैरन्यैः सर्वग्रहैर्द्वितनुस्थैर्द्विस्वभावराशिस्थितैःस्ववीर्यसमन्वितैर्बलिभिश्चकोशवेष्टितौएकजरायुवेष्टितौयमलौजायेते ४ ॐ ॐ ॐ

अथुनानालवेष्टितजन्मज्ञानमनुष्टुभाह छागेति छागोमेषःसिंहःप्रसिद्धः वृषोवृषभः एतैः छागसिंहवृषैर्लग्नस्थितैः एषामन्यतमोयदिलग्नगतो भवतिनतस्थेसौरेऽथवाकुजेतस्मिन्छागसिंहवृषाणामन्यतमेलग्नगतेतत्स्थेतत्रस्थेसौरेशनैश्चरेऽथवाकुजेभौमेनत्रस्थेनालवेष्टितोजंतुर्जायते नालशब्देननाड्योऽभिधीयंते कस्मिन्नंगेवेष्टितइत्याह राश्यंशसदृशेगात्रेति राशेरंशोराश्यंशः राशेः लग्नस्ययोनवांशकस्तत्कालमुदितः सचयद्राशिसंबंधीसचराशिर्यस्मिन्नंशेकालपुरुषस्य व्यवस्थितः कालांगानीत्यादिनाग्रंथेननिरूपित स्तत्सदृशेगात्रेतस्मिन्नेवांगे नाड्यावेष्टितइतिवक्तव्यम् तथाचसारावल्याम् सिंहाजगोभिरुदयेसूतेनालेनवेष्टितोजंतुः लग्नेकुजेथसौरेराश्यंशसमानगात्रेषु ५ अथुना जारजातकज्ञानंवंशस्थेनाह नलग्नमिति गुरुर्जीवोलग्नमुदयमिंदुंचंद्रंचयदिननिरीक्षतेनपश्यति लग्नचंद्रावेकराशिस्थौपृथकूस्थौवायदोभा

छागेसिंहेवृषेलग्नेतत्स्थेसौरेथवाकुजे राश्यंशसदृशेगात्रेजायतेनालवेष्टितः ५ नलग्नमिंदुंचगुरुर्निरीक्ष
तेनवाशशांकंरविणासमागतम् सपापकोर्केणयुतोथवाशशीपरेणजातंप्रवदंतिनिश्चयात् ६ ७

वपिगुरुणानदृश्यतेतदापरेणजारेणजातइतिनिश्चयात्प्रवदंतिकथयंतिमुनयः अत्रयदिलग्नचंद्रौजीवभागस्थौजीवनवांशकस्थौभवतः तदानपरजातइतिवक्तव्यं यस्माद्यवनेश्वरः अजीवभागेप्यनवीक्षितेवाजीवेथचंद्रेणविलग्नभेवा जातंपरोद्भूतमितिब्रुवंतिवाच्योजनेनाथबलावलोकादिति १ नवाशशांकमिति शशांकंचंद्रंरविणासूर्येणसमागतंसंयुक्तंगुरुर्ननिरीक्षतेचंद्रार्कावेकराशिस्थौयदिचबृहस्पतिनानदृश्येतेतदापरेणजातः अथवाशशीचंद्रःसपापश्चपापग्रहेणभौमेनसौरेणवायुक्तः तथाविधोर्केणसूर्येणयदियुक्तोभवतितथापिपरेणजातइति अत्राप्यन्येजीवदृष्यानुवर्णि

व्याख्यानंकुर्वंतितदयुक्तं यस्माच्चंद्रार्कावेकराशिगतौपापयुक्तावयुक्तौवाजीवेनदृश्यमानौवाजारजातजन्मकरौ तत्रचंद्रार्कयोर्योगः पापेनसमेत्यकिंकृ तंभवति तस्माच्चंद्रार्कावेकराशिगतौ अपापौजीवेनादृश्यमानौसपापौजीवेनदृश्यमानौ अदृश्यमानौवाजारजातजन्मकरौनिश्चयात्प्रवदंति अत्रच द्रष्टव्यं यदिगुरुबृहस्पतिगृहेतद्रेष्काणतन्नवांशकद्वादशभागत्रिंशद्भागस्थोभवति अन्यत्रवाराशौगुरुणायुक्तस्तदानजारजातइति यस्माद्भगवान्गा र्गिः गुरुक्षेत्रगतेचंद्रेतद्युक्तेवान्यराशिगे तद्रेष्काणेतदंशेवानपरैर्जातइष्यते ६ अधुनाजातस्यपितृबंधनयोगज्ञानंवैतालीयेनाह क्रूरर्क्षगताव ति क्रूरर्क्षाणिक्रूरग्रहराशयः मेषसिंहवृश्चिकमकरकुंभाः कृष्णपक्षस्थेक्षीणचंद्रेकर्कटः पापयुक्तेबुधेपिकन्यामिथुने अशोभनौपापौ शनिभौमौ

क्रूरर्क्षगतावशोभनौसूर्याद्द्यूननवात्मजस्थितौ बद्धस्तुपिताविदेशगः स्वेवाराशिवशादथोपथि ७
पूर्णेशशिनिस्वराशिगेसौम्येलग्नगतेशुभेसुखे लग्नेजलजेस्तगेपिवाचंद्रेपोतगताप्रसूयते ८ ७

क्रूरर्क्षगतौपापक्षेत्रस्थितौसूर्यादर्वेद्यूननवात्मजस्थितौ द्यूनंसप्तमंनवमंप्रसिद्धंआत्मजस्थानंपंचमंएषामन्यतमस्थौभवतस्तदाजातस्यपिताजन कोबद्धोवाच्यः तस्यादित्याक्रांतराशिवशाद्बंधनदेशज्ञानमाह स्वेवाराशिवशादथोपथीति चरराशिस्थेर्केपरदेशेबद्धः स्थिरराशिस्थेर्केस्वदेशे द्विस्वभावेपथिमार्गेएवंराशिवशात्स्थानपरिज्ञानं अथोइत्ययंनिपातोविकल्पेनकेचित्स्वेवाचरराशिवशात्तथापथीतिपठंति ७ अधुनापोतग- ताप्रसवज्ञानंवैतालीयेनाह पूर्णेति शशिनिचंद्रेपूर्णेपरिपूर्णमंडलेतस्मिंश्चस्वराशिगेकर्कटस्थितेतथासौम्येबुधेलग्नगतेउदयस्थेशुभेजीवे- एवंसुखेचतुर्थस्थेपोतगताप्रसूयतइतिवक्तव्यम् तत्रान्यशुभैःसुखइतिपठंतिपठित्वात्वेवंव्याचक्षते शुभैःसुखेचतुर्थभवनेशुभैरि

निबहुवचनंनयत्नेलग्नेबुधउक्तः शुक्रबृहस्पतीशोषौशुभमशुभमित्येवंशशीति यच्छ्रियतेशुभैरिति तस्मादेवमवसीयतेपूर्णश्चंद्रमाः शुक्रबृहस्पति
भ्यांयुक्तोभवति तदाशुभैरितिभवति एतच्चमेषलग्नेतत्रस्थेबुधेपूर्णचंद्रेशुक्रबृहस्पतिभ्यांसमायुक्ते कर्कटव्यवस्थितेसर्वंयुज्यतइति अयंपाठोम
ध्यास्थानेनयुक्तः यस्मान्मकरावस्थितेऽर्केकर्कटस्थश्चंद्रमाः पूर्णोभवति मकरव्यवस्थितेचार्केमकराच्चतुर्थभवनेमेषेबुधस्यसंभवोनास्ति
किंपुनर्मकरात्सप्तमराशौकर्कटेशुक्रस्याप्यवस्थानंभवति तस्माच्छुभैस्मरवेइतिसमस्यैकवचनांतएवपाठोन्याप्यशुभैस्मरवइति तत्कथं-
जीवोव्याख्यातः उच्यते बुधोलग्नगतस्तस्माच्चतुर्थेशुक्रस्यावस्थानंनभवति अतोजीवइतिव्याख्यातं केचित्पूर्वशास्त्रानुसारेणतिशुक्रइत्थं
ति अथपोतगताप्रसवयोगोद्वितीयः लग्नेजलजइति लग्नेजलजेजलराशौकर्कटमकरपश्चिमार्द्धमीनानामन्यतमेतस्माद्दत्तगेससमस्थानस्थे

आप्योदयमाप्यगः शशीसंपूर्णः समवेक्षतेथवा मेषूरणबंधुलग्नगः स्यात्सूतिः सलिलेनसंशयः ९

चंद्रेपूर्णेवाऽपूर्णेचपोतगतेवप्रसूयतइतिवाशब्दःप्रकारार्थः ८ अथोदकमध्यप्रसवज्ञानंवैतालीयेनाह आप्योदयइति आप्यराशयोमकरपश्चा
र्द्धकर्कमीनास्तेषामन्यतमस्योदये आप्योदयेजलराशिर्लग्नेभवतिशशीचंद्रश्चाप्यगोजलराशिस्थः तदासूतिः प्रसवः सलिलेजलसमीपेनसंशयः
निश्चयाद्वाच्यः अथवासंपूर्णः शशीलग्नगमाप्योदयंसमवेक्षतेपश्यति तथापिसलिलेजलसमीपेप्रसूतिः मेषूरणबंधुलग्नइति अथवाप्यराशावु
पगतेमेषूरणबंधुलग्नगेमेषूरणेदशमेबंधुस्थानेचतुर्थेलग्नेप्राग्लग्नगेस्थितः स्यादुक्तेतथापिसलिलेप्रसूतिरितिवदेत् तथाचसारावल्याम् सलिलप्र
लग्नेचंद्रेजलराशौवीक्ष्यतेथवापूर्णः प्रसवंसलिलेविंद्यादंधूदयदशगश्चयदा ९ ७ ७ ७ ७

अधुनाबंधनागारावटयोःप्रसवज्ञानंवैतालीयेनाह उदयेति उदयोलग्नंउडुपश्चंद्रः तयोरुदयोडुपयोरेकराशिस्थयोर्यमेसौरेव्ययस्थितेद्वादशस्थेतस्मिं
श्चपापनिरीक्षितेगुल्यांबंधनागारेप्रसूयतेइतिवक्तव्यं सौरेशनैश्चरेअलिकर्किंयुतेवृश्चिककुलीरयोरन्यतमस्थेविलग्नगेतस्मिंश्चशीतकरेक्षितेचंद्रदृष्टेऽवटे
श्वभ्रेप्रसूतिर्वक्तव्या १० अथक्रीडागृहदेवालयसोरवरभूमिप्रदेशेषुप्रसवज्ञानंवैतालीयेनाह मंदेति मंदेशनैश्चरेऽब्जगतेजलराशिस्थेतथाभूतेविल
ग्नगेप्राग्लग्नस्थेक्रमात्तारिपाल्याबुधसूर्येंदुनिरीक्षितेबुधक्रीडाभवनेक्रूरालयेसोरवरभूमिषुचप्रसूयतइतिवदेत् एतदुक्तंभवति शनैश्चरेजलरा-
शिस्थेलग्नगतेबुधनिरीक्षितेबुधदृष्टेक्रीडाभवनेरतिगृहेप्रसूयते एवंसूर्येणार्केणनिरीक्षितेसोरवरभूमिषुसबालुकास्ववनिषुप्रसूयतइति ११

उदयोडुपयोर्व्ययस्थितेगुर्व्यांपापनिरीक्षितेयमे अलिकर्कियुतेविलग्नगेसौरेशीतकरेक्षितेवट
टे १० मंदेऽब्जगतेविलग्नगेबुधसूर्येंदुनिरीक्षितेक्रमात् क्रीडाभवनेक्रूरालयेसोरवरभूमिषुचप्रसूयते ११

अथश्मशानरम्यप्रदेशाग्निशालानृपदेवगृहगोकुलशिल्पालयप्रसवज्ञानमेवोपजातिकयाह नृलग्नगमिति पूर्वश्लोकान्मंदइत्यनुवर्तते प्रत्यासन्नत्वा
त् नृलग्नगंनरराशिलग्नस्थितंनरराशयोमिथुनकन्यातुलाधन्विपूर्वार्धकुंभाः तत्रगतंशनैश्चरंकुजोंगारकःप्रेक्ष्यदृष्ट्वाभौमोयदिपश्यति तदाश्मशा
नेप्रसवंजन्मकरोति केचिन्नृलग्नदर्शीक्षितिजइतिपठंति नृलग्नगंपश्यतितच्छीलोनृलग्नदर्शीक्षितिजः रम्येसितेंदूइति नरराशिलग्नगतंशनैश्चर
युक्तंसितःशुक्रः इंदुश्चंद्रोवापश्यतितदारम्येरमणीयप्रदेशेजन्मएवंविधंसौरं गुरुर्जीवःपश्यतितदाऽग्निहोत्रेऽग्निशालायांएवंविधं

सौरिं रविः पश्यति तदा नरेंद्रामरगोकुलेषु नरेंद्रगृहे राजवेश्मनि अमरगृहे देवागारे वा गोकुले वा गोशालायां प्रसूतिः जन्म एवमेव बुधेन दृष्टे सौरे शिल्पालये शिल्पिगृहे चित्रपुस्तककरवर्धकिप्रभृतीनां शिल्पिनां प्रसिद्धानामन्यतमस्य गृहे प्रसूतिरिति तथा च सारावल्याम् रविजे जलजविलग्ने क्रीडोद्याने बुधेक्षिते प्रसवः रविणा देवागारे तथोरवरे चैव चंद्रेण १ आरण्यभवनलग्ने गिरिवनदुर्गे तथा नरविलग्ने रुधिरेक्षिते श्मशाने शिल्पिकनिलये च सौम्येन तथा च बादरायणः सूर्येक्षिते गोनृपदेववासे शक्रेड्याभ्यां रमणीयदेशे सुरेज्यदृष्टे द्विजवह्निहोत्रे नरोदये संप्रवदंति सूतिं १२ अथ प्रसवदेशज्ञानं वैवाडीयेनाह राश्यंशेति राशिश्च अंशाश्च तद्राश्यंशं राशिर्लग्नराशिरंशो नवांशकः लग्नराशेस्तन्नवांशकस्य वा यः समानः सदृ-

नृलग्नगं प्रेक्ष्य कुजः श्मशाने रम्ये सितेंदू गुरुरग्निहोत्रे रविर्नरेंद्रामरगोकुलेषु शिल्पालये ज्ञः प्रसवं करोति १२ राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे स्वर्क्षांशगते स्वमंदिरे बलयोगात्फलमंशकर्क्षयोः १३

शस्त्वात्मीयगोचरो विषयः स्वचराश्च सर्व इत्यनेन प्रदर्शितः तत्र यस्मिन्यस्मिन्प्रदेशे यो यो राशिरूपः प्राणी संचरति तत्र यो मार्गः पंथास्तस्मिन्जन्म यदि चरलग्नस्तन्नवांशको वा यदि चरो भवति अथ लग्नराशिस्तन्नवांशको वा स्थिरस्तदा राशिरूपतुल्यस्य प्राणिनः यस्मिन्गृहे यत्र प्रसवे संनितत्स्थाने राशिस्वरूपतुल्यस्य प्राणिनो य गृहं समीपस्तत्र प्रसव इत्यर्थः स्वर्क्षांशगत इति चरस्य स्थिरस्य द्विस्वभावस्य वा राशेर्लग्नगतस्य स्वर्क्षांश आत्मीयनवांशको द्योयदा भवति तदा स्वमंदिरे आत्मीयगृहे एव जन्म वक्तव्यं तत्र राश्यंशसमानगोचरे मार्गे जन्म इत्यादि सामान्येनोक्तं तत्र ज्ञायते किं लग्नराशिसमानगोचरे किमंशसमानगोचरे प्रसवो देशः क्रियतां तदर्थमयं निश्चयः बलयोगादिति अंशको नवांशकः ऋक्षं राशिः अनयोर्बलयोगात्फलं प्र-

सवस्थानज्ञानं एतदुक्तंभवति लग्नराशेर्नवांशकराशेश्चयोबलवांस्तत्समानगोचरेमार्गगृहसमीपेषुप्रसवोवक्तव्यः अत्रपूर्वोक्तयोगाभावेराश्यंशसमान
गोचरमार्गादिषुप्रसवोवक्तव्यः तेषांसंभवेयोगोक्तप्रदेशेष्वेवप्रसवोवक्तव्यः १३ अथयस्मिन्योगेजातोमात्रात्यज्यतेयस्मिंश्चयोगेजातस्त्यक्तोपिमात्रा
दीर्घायुःसुखीचभवति तद्योगद्वयंवैतालीयेनाह आरार्केति चंद्रेशशिन्यारार्कजयोर्भौमसौरयोरेकराशिगतयोस्त्रिकोणगेनवमस्थेपंचमस्थेवाऽ
स्तेचसप्तमेस्थानेस्थितेजातोंबयामात्रादिसृज्यतेत्यज्यते एवंविधेयोगेचंद्रमसिअमरराजमंत्रिणागुरुणादृष्टेमात्रात्यक्तोपिपरहस्तगतोपिदीर्घायुः
चिरजीविसुखभाक्चप्रकाविभोगीभवति १४ अथयस्मिन्योगेजातोमात्रात्यक्तोविनश्यतितद्वसंततिलकेनाह पापेक्षितइतितुहिनगोचंद्रेपापेक्षिते
पापग्रहदृष्टेसौरेणार्केणवेत्यर्थः तथाभूते उदयेलग्नेस्थितेकुजेभौमेस्तेसप्तमस्थानस्थेजातोमात्रात्यक्तोविनश्यतिम्रियतइत्यर्थः कुजार्कजयोरिति

आरार्कजयोस्त्रिकोणगेचंद्रेऽस्तेचविसृज्यतेंबया दृष्टेमरराजमंत्रिणादीर्घायुःसुखभाक्चसस्मृतः १४

तथातेनैवप्रकारेणलग्नगतेचंद्रमसिपापेक्षितेसूर्यदृष्टेकुजार्कजयोर्भौमशनैश्चरयोरायेएकादशस्थितयोर्जातोमात्रात्यक्तोपिविनश्यतिम्रियतइत्यर्थः
सौम्येपिपश्यतीति पूर्वोक्तयोगस्थेचंद्रमसिपापदृष्टेसौम्येशुभग्रहेपिपश्यति सतुजातोमात्रात्यज्यतेत्यक्तोपियादृग्वर्णप्रभुणासौम्यग्रहेणचंद्रमादृ
ष्टस्तथाविधस्यहस्तमेतिनादृग्वर्णस्यब्राह्मणादेर्हस्तंगच्छतितेनउत्थापितोजीवतिच अथास्मिन्नवयोगेस्थितश्चंद्रमापापेनकुजेनसूर्येणसौरेणवादृ-
श्यतेऽन्येनसौम्यग्रहेणचदृश्यतेतदाजाततयोर्दृष्टग्रहयोर्योबलवांस्तादृग्वर्णस्यब्राह्मणादेर्हस्तंगतोपिविनश्यति यदुक्तं सौम्येतरेषुपरहस्तगतोप्य
नायुरिति ननुयथायोगस्थेचंद्रमसिसौम्यैःपापैश्चदृश्यमानेमात्रात्यक्तोविनश्यतीत्यभिहितंतत्रक्षत्रियवैश्यशूद्रवर्णसंकरादिषुहस्तगतःसर्वएव-

विनाशमाप्नोतिबहवश्चमात्रात्यक्ताः क्षत्रियादिवर्णसंकरगताश्चजीवमानादृश्यंते तस्मात्पूर्वंश्लोकादृष्टेःमरराजमंत्रिणादीर्घायुःसुखभाक्चसस्मृतइत्येनदिह शेषभूतमवगंतव्यं तस्माद्बुधेनशुक्रेणवायथादर्शितयोगस्थश्चंद्रमादृश्यते जीवेननदृश्यतेतदापरहस्तगतोपिम्रियते यदापापेनसौम्येनवादृश्यमानोपि जीवेनदृश्यतेतदादृष्टग्रहबलवशात्तद्वर्णस्यब्राह्मणादेर्हस्तगतोजीवति तथाचसारावल्याम् म्रियतेपापैर्दृष्टःशशिनिविलग्नेकुजेस्तगेत्यक्तः लग्ना च्चलाभगतयोर्वसुधासुतमंदयोरेवम् पश्यतिसौम्योबलवान्यादृग्गृण्हातितादृशोजातं शुभपापग्रहदृष्टेपरैर्गृहीतोप्यसौम्रियते सर्वेष्वेतेषुयदा योगेषुशशिसुरेज्यसंदृष्टः भवतितदादीर्घायुर्हस्तगतःसर्ववर्णेषु १५ अधुनाप्रसवगृहज्ञानंवैतालीयेनाह पितृमातृइतिपितृमातृग्रहादिवार्क शुक्रावित्यादिनोक्ताः तद्बलात्पितृमातृग्रहवीर्यात्पितृमातृगृहेषुप्रसूयतइतिवदेत् तदार्कशनैश्चरयोरन्यतमेबलवतिपितृगृहेपितृष्वसृपितृव्या

पापेक्षितेतुहिनगावुदयेकुजेऽस्तेत्यक्तोविनश्यतिकुजार्कजयोस्तथाये सौम्येपिपश्यतितथाविधहस्तमेतिसौ
म्येतरेषुपरहस्तगतोप्यनायुः १५

दिसंबंधिगृहेप्रसूतिः एवंमातृग्रहयोश्चंद्रशुक्रयोरन्यतमेबलवतिमातृगृहेमातृष्वसृमातुलादिगृ हेप्रसूतिः तरुशालादिषुनीचगैःशुभैरिति बहुवचनात्सर्वएवशुभग्रहाः यदानीचस्थाभवंतितदातरुषुवृक्षेषुशालासुप्राकारसमीपेषुप्रसवोवा च्यः आदिग्रहणान्नदीकूपारामपर्वता दिप्रदेशोपवनाद्वनेष्विति यदिनैकगतैरिति नीचगैःशुभैरित्यनुवर्तते सर्वेशुभग्रहाःनीचगताःस्तैर्लग्नेंदू उदयचंद्रावुभावप्येकराशिगतौग्रहैर्बहुवचनात्त्रिप्रभृतिभिर्यदानदृश्येतेतदाविजनेजनरहितस्थानेऽटव्यांप्रसूतिरिति यदापुनरेकस्थैर्बहुभि- र्ग्रहैर्यदालग्नेंदूदृश्येतेतदाजनाकीर्णेप्रसूतिरिति तथाचसारावल्याम् पितृमातृग्रहेवर्गेतत्स्वजनगृहेषुबलयोगात् प्राकारतरुनदीषुचप्रसूतिर्नीचा

श्रितैः सौम्यैः नेक्षितेलग्नेंदू यद्येकस्याग्रहास्तदाद्व्याम् १६ अधुनादीपसंभवासंभवभूप्रदेशेप्रसवज्ञानंगर्भमोक्षमातुःक्लेशज्ञानंमंदाक्रांतयाह मंदर्क्षांश इति शशिनिचंद्रेयत्रतत्रराशौमंदर्क्षांशेशनैश्चरस्यनवभागेमकरकुंभयोरन्यतमांशकस्थेतमस्यंधकारेसूतिकाशयनंवक्तव्यं हिबुकेलग्नाच्चतुर्थस्थे-चंद्रेंधकारएवशयनं यत्रतत्रावस्थितेचंद्रेमंदेनसौरेणदृष्टेंधकारएव अब्जगेवाअब्जराशौअत्रकर्कटमीनौद्वौविज्ञेयौमकरकुंभयोरुक्तत्वात् मंदर्क्षांशेत्यादिनेति तेनयत्रतत्रराशौकर्कटनवांशकस्थेचंद्रेमध्यंधकारएवमीननवांशकस्थेवातमस्यंधकारएव तद्युक्तेवेति तदितिसौरःपरामृश्यते यत्रतत्रावस्थितेचंद्रेसौरयुक्तेंधकारएव एवंनिषेककालेन शयनमपिसर्वेषुतेषुयोगेषुयदार्कदृष्टःचंद्रमाभवतितदांधकारएव यस्माद्यवनेश्वरः सौरांशक

पितृमातृगृहेषुतद्बलात्तरुशालादिषुनीचगैःशुभैः यदिनैकगतैस्तुवीक्षितौलग्नेंदूविजनेप्रसूयते १६ मंदर्क्षांशेशशिनिहिबुकेमंददृष्टेऽब्जगेवातद्युक्तेवातमसिशयनंनीचसंस्थैश्चभूमौ

स्थेशशिनिमलग्नेजलेजलाख्यांशकमाश्रितेवा स्वांशस्थितेकेंद्रगतेर्कजेवाजातस्तमिस्रेयदिनार्कदृष्टः १ अन्येषांमतंयथा सूर्येबलवतिभौमेनदृष्टेसत्स्वपियोगेष्वंधकाराभावः तथाचसारावल्याम् बलवतिसूर्येदृष्टेबहुमदीपांधशार्कपुत्रेण अन्यैर्व्यपगतवीर्यैःसूतौज्योतिस्तृणेभवति सौरांशेजलजांशेचंद्रःकयुतेयथाहिबुके तद्दृष्टेवाकुर्यात्तमसिप्रसवंनसंदेहः नीचसंस्थैश्चभूमौशयनमित्यनुवर्तते बहुवचनाद्यथासंभवंत्रिप्रभृतिभिर्ग्रहैर्नीचस्थैर्भूमौशयनंवाच्यम् भूशब्देनात्रतृणास्तृताभूर्ज्ञेया केचिल्लग्नस्थेचतुर्थस्थेवानीचगतेचंद्रेभूशयनमिच्छंति यथासारावल्याम् नीचस्थेभूशयनंचंद्रेप्यथवास्मरेर्वाविलग्नेवा यद्वादिति प्रसवलग्नराशिर्यद्द्येनप्रकारेणहरिजंव्रजत्युदयलेखांपरित्यजतितद्वत्तेनैवप्रकारेणनार्यागर्भमो

क्षोवाच्यः यत्राकाशंभूम्यामहासक्तंसमंनादृश्यनेनद्धरिजं उक्तंच हरिजमिति गगनमवनोसंदक्तमिवलक्ष्यतेयथोक्तेषु तद्यथा शीर्षोदयेषुलग्नेषू
[illegible]स्यारंदर्शयतोगर्भस्यमोक्षोवाच्यः पृष्ठोदयेषधोमुखस्यपृष्ठंदर्शयतः मीनोदयेपार्श्वंदर्शयतः तथाच्चसारावल्याम् शीर्षोदयेविलग्नेमूर्ध्नाप्रसवो
न्यथोदयेचरणैःउभयोदयेचहस्तैः शुभदृष्टेशोभनोन्यथाकृष्टः केचिदेवंव्याचक्षते यथालग्नाधिपोनवांशकाधिपोवा लग्नस्थोवाग्रहोवक्रोभवतिव
दावैपरीत्येनगर्भमोक्षोभवति तथाचमणित्थः लग्नाधिपेंशकपतौलग्नस्थेवक्रिणेग्रहेप्यथवा विपरीतगतोमोक्षोवाच्योगर्भस्यसंक्लेशः पापैरिति
पापग्रहैश्चंद्रगतैः शशिनासहव्यवस्थितैः स्मरगतैर्लग्नात्सप्तमस्थैर्वा खस्वगतैश्चतुर्थस्थैर्वाप्रसवकालेजनन्याःमातुः क्लेशमाहुः कष्टंकथयंतिसूर
यः तथाचसारावल्याम् क्लेशोमातुःक्रूरैर्बंधस्तगतैःशशांकयुक्तैर्वा १७ अथदीपगृहद्वारज्ञानमिंद्रवज्रयाह स्नेहःशशांकादिति शशांकाच्चं

**यद्वद्राशिर्व्रजतिहरिजंगर्भमोक्षस्तुतद्वत्पापैश्चंद्रात्स्मरसुखगतैः क्लेशमाहुर्जनन्याः १७**

द्रात्स्नेहोवाच्यः जन्मकालेपूर्णेचंद्रमसिस्नेहेनपूर्णंदीपभाजनंवक्तव्यं क्षीणेक्षीणस्नेहात्कमिति तथाचसारावल्याम् दीपःपूर्णःपूर्णेशशिनि-
क्षीणेक्षयस्तुतैलस्य यद्येवंतदामावास्यायांसर्वेषामंधकारेप्रसवोभवति तस्मादयुक्तमेतत् तेनयत्रराशौचंद्रमाव्यवस्थितस्तत्रयदिराशिप्रारंभे
स्थितोभवतितदादीपभाजनंस्नेहेनपूर्णंवक्तव्यं यत्रराश्यवसानेस्थितस्तत्रस्नेहांतंदीपंस्नेहरहितं मध्यंमध्येऽर्धम् अन्यत्रानुपातादिति उद
याच्चवर्तिः उदयाल्लग्नाद्दीपवर्तिरादेश्या लग्नारंभेतत्क्षणदत्तावर्तिरादेश्या मध्येअर्धदग्धावर्तिः लग्नावसानेवर्तिदाहोवाच्यः अंतरेनुपातः तथा
चसारावल्याम् यावल्लग्नादुदितंवर्तिर्दग्धातुतावतीभवति दीपोर्कयुक्तर्क्षवशादिति अर्कोरविस्तद्युक्तराशिवशाच्चरादौदीपोवाच्यः तत्रचरराशि

अवस्थितेर्के संचार्यमाणोदीपआदेश्यः स्थिरराशिस्थेर्के एकदेशस्थः दीपः द्विस्वभावस्थेर्केचालितः प्रतिष्ठितइति केचिद्वदंति यथायस्मिन्राशावर्कःस्थितः
सराशिर्यस्यांदिशिस्थितः प्रागादीशाः क्रियवृषनृयुक्कर्कटेत्यादिनाप्रदर्शितस्तस्यांदिशिदीपआदेश्यः अन्येएवंवदंति यथायस्यांदिशिअर्कोप्र
मवेशेनाष्टप्रहरकल्पनयाष्टसुदिक्षु परिभ्रमतितेनैवक्रमेणयस्यांदिशिव्यवस्थितः तस्यांदिशिगृहस्यदीपस्थानमिति तथाचसारावल्याम् द्वाद
शभागविभक्तेवासगृहेव्यवस्थितेसहस्रांशौ दीपश्चरस्थिरादिषुतथैववाच्यः प्रसवकाले अत्रप्राच्यादिगृहंद्वादशधाविभज्यमेषादिगणनयार्क
राशिर्यत्रभवतितत्रदीपस्थानमिति केचित्तुलग्नस्ययादृशोवर्णस्तादृग्वर्णादीपवर्तिमिच्छंति तथाचमणित्थः लग्नस्ययोत्रवर्णोनिर्दिष्टःस्तेनवर्ति

स्नेहःशशांकादुदयाच्चवर्तिर्दीपोर्कयुक्तर्क्षवशाच्चराद्यः द्वारं
चतद्वास्तुनिकेंद्रसंस्थैर्ज्ञेयंग्रहैर्वीर्यसमन्वितैर्वा १८

राद्देश्या द्वारंचद्वास्तुनीति तद्वास्तुनिसूतिकागृहेलग्नात्केंद्रस्थैर्ग्रहैर्द्वारादेशःकार्यः तस्यग्रहस्ययादिक्प्राच्याचारविशुक्रलोहितत्मेत्यादिनोक्ता
तद्दिगभिमुखंसूतिकागृहंवक्तव्यं बहुषुकेंद्रेषुबलवद्ग्रहवशात् शून्येषुकेंद्रेषुतल्लग्नराशिवशात् लग्नस्ययादिक्तदभिमुखंयस्मादनेनैवस्वल्प
जातकेउक्तं द्वारंवास्तुनिकेंद्रोपगताद्गृहाद्बलसमेताद्विलग्नर्क्षात् अन्येवदंति यथालग्नद्वादशभागराशिदिगभिमुखंसूतिकागृहद्वारं तथा
चमणित्थः लग्नेयोद्विरसस्तदभिमुखंसूतिकागृहेद्वारं एतच्चसंवादेनापिदृष्टमिति वीर्यसमन्वितादित्युत्तरत्रसंबध्यते केचिद्वदंति यथावीर्य
समन्विताद्ग्रहाद्गृहद्वारंवदेत् तथाचसारावल्याम् वासगृहोद्यानगतंद्वारंदिक्पालकाद्बलोपेतादिति १८

अधुनासूतिकागृहस्वरूपज्ञानंशार्दूलविक्रीडितेनाह जीर्णसंस्तुतमिति वीर्यसमन्वितादित्यनुवर्तते सर्वग्रहेभ्योर्कजसौरे वीर्यवतिसबले जीर्णमितिचिरंतनम् भूयःसंस्तुतंसूतिकागृहंवक्तव्यं क्षितिसुते भौमेबलवत्यग्निनादग्धं शीतगौचंद्रेनवं शुक्लपक्षेउपलिसंवदेत् यस्माद्यवनेश्वरः संवर्धताचंद्रमसोपलिप्तमिति काष्ठाढ्यंनदृढंरवावितरवावादित्येकाष्ठाढ्यं दारुबहुलं नदृढमसारं शशिसुतेबुधेनहूहं अनेकशिल्प्युद्भवं बहुविधशिल्पिरचितं रम्यंचित्रयुतमिति भृगुजेशुक्रेरम्यंरमणीयंमनोरमंचपरं नवंनूतनंचित्रयुतंचित्रकर्मयुक्तं जीवेगुरौदृढंचिरकालस्थायि चक्रस्थेभचक्राधिरूढेग्रहदातृग्रहसमीपस्थैरन्यग्रहैः सामंतपूर्वांसमंतात्सर्वदिक्षुयथोपदिष्टांवदेद्ब्रूयात् सामंतपूर्वामितिवेश्मिकवेश्मनां

जीर्णसंस्तुतमर्कजेक्षितिसुतेदग्धंनवंशीतगौकाष्ठाढ्यंनदृढंरवौशशिसुतेलनैकशिल्प्युद्भवम्
रम्यंचित्रयुतंनवंचभृगुजेजीवेदृढंमंदिरंचक्रस्थैश्चयथापदेशरचनांसामंतपूर्वांवदेत् १९ ७

सामंतात्क्रमेणेत्यर्थः यथागृहदातृग्रहस्यपुरतः पश्चाद्वापार्श्वयोर्वाऽन्येग्रहाव्यवस्थितास्तेनैवक्रमेणसूतिकागृहस्थान्यनिप्रतिवेश्मगृहाणिवाच्यानि अन्येसामंतपूर्वामितिपठंति सामंतात्गृहपर्यंतपूर्विकारचनामिति तथासारावल्याम् भवनग्रहसंयोगैःप्रतिवेश्माश्रितनीयानि देवालयांबुपावककोशाविहाराद्यवस्करस्थानं निद्रागृहंचभास्करशशिकुजगुरुभार्गवार्किबुधयोगात् अत्राचार्येणभूमिकाप्रमाणंनोक्तं त्रिशालद्विशालज्ञानंचतदुच्यते बृहस्पतौकर्कटस्थेपरमोच्चाद्दूरेलग्नात् दशमगेद्विभूमिकमुच्चभागेधर्वाक्स्थितेत्रिभूमिकंउच्चभागस्थेचतुर्भूमिकं धनुषिसबलेदशमस्थानस्थेगुरौत्रिशालंतद्वद्गृहंमिथुनकन्यामीनस्थेद्विशालं उक्तंचस्वल्पजातके गुरुरुच्चेदशमस्थे

द्वित्रिचतुर्भूमिकं करोतिगृहं धनुषिसबलेत्रिशालं द्विशालमन्येष्वमलेषिति १९ अथसमस्तवास्तुनिक्वसूतिकागृहमितितद्विज्ञानं दोधकेनाह मेषे
ति मेषःप्रसिद्धः कुलीरः कर्कटः तुलातुलएव अलिर्वृश्चिकः घटः कुंभः एषामन्यतमेलग्नेवास्तुनिप्राग्भागेसूतिकास्थानंवक्तव्यं अंशेवा उत्तरतो
गुरुसौम्यगृहेषुगुरुगृहेधन्विमीनौ सौम्यगृहेमिथुनकन्येएतेषुलग्नेषुतदंशकेचोत्तरतोवास्तुनिसूतिकागृहंवाच्यम् वृषेणतदंशकेनचगृहपश्चिम
भागेसूतिकागृहं मृगसिंहौमकरकेसरिणौदक्षिणभागकराविति दक्षिणभागेसूतिकागृहंकुरुतः २० अथसूतिकागृहेक्वशयनमितितज्ज्ञानंवै
तालीयेनाह प्राच्यादिगृहेति गृहेसूतिकावेश्मनिप्राच्यादिदिशिपूर्वाद्यास्वष्टसु दिक्षुक्रियादयोमेषादयोराशयः द्वौद्वौचतस्रषुदिक्षुको-

मेषकुलीरतुलालिघटैः प्रागुत्तरतोगुरुसौम्यगृहेषु प
श्चिमतश्चवृषेणनिवासोदक्षिणभागकरौमृगसिंहौ २०

णगताविदिक्स्थाद्विमूर्तयोद्विस्वभावाः तद्यथा मेषवृषयोर्लग्नयोर्गृहस्यप्राग्विभागेसूतिकाशयनं मिथुनेआग्नेयां कर्कसिंहयोर्दक्षिणे कन्यायांनैर्ऋत्येतुला
वृश्चिकयोःपश्चिमे धनुषिवायव्ये मकरकुंभयोःउत्तरे मीनेऐशानेइति एषएवविधिःशय्यास्वपिवक्तव्यः अतउक्तंशय्यास्वपिवास्तुवद्वदेदिति किंत
यंविशेषःपादैःषट्त्रिनवांत्यसंस्थितैरिति इहखट्वापादाः षट्त्रिनवांत्यराशयःलग्नात्षष्ठतृतीयनवमद्वादशराशयःपादाःपरिकल्प्याः तत्रैतज्ज्ञातं
येनलग्नेनप्रसवस्तदुक्तदिशिशय्यायाःशिरस्तस्मादेवषट्त्रिनवांत्याःपादाःतत्रद्वादशतृतीयौपूर्वपादौ तत्रापितृतीयोदक्षिणःपादोद्वादशोवामः षष्ठनवमौ
पश्चिमपादौ तत्रापिषष्ठोदक्षिणोनवमोवामः लग्नद्वितीयौशीर्षभागः चतुर्थपंचमौदक्षिणमंगंसप्तमाष्टमौपादांतभागः दशमैकादशौवामांगंप्र-

योजनंविनतत्वंयमलर्क्षैः क्रूरैस्तुतुल्यउपघातइति यत्राहिस्वभावराशयः स्थितास्तत्रविनतत्वं यत्रपापास्तत्रतत्सदृशोवोपघातः एवंसदेवानुपपन्न-
खट्वांगप्रसंगः यस्मादवश्यंक्वचिदपियमलर्क्षेणपापग्रहेर्भवितव्यं तस्माद्यत्रयमलर्क्षेसौम्यग्रहस्वामियुतदृष्टंतत्रविनतत्वंपापग्रहोपिस्वोच्चराशि
त्रिकोणमित्रक्षेत्रस्थोशुभफलकरोनभवतीति २१ अधुनोपसूतिकासंख्यामनुष्टुभाह चंद्रलग्नेति लग्नादारभ्ययत्रराशौचंद्रमाव्यवस्थितस्त-
दंतरेतयोर्मध्येयावंतोग्रहाव्यवस्थितास्तेचंद्रलग्नांतरगताग्रहास्तैरुपसूतिकाःस्युः तावत्संख्याउपसूतिकाःसमीपवर्तिन्यः स्त्रियःस्युर्भवेयुः
ताश्चग्रहजातिवयोवर्णरूपाः तथाचसारावल्याम् शशिलग्नविवरयुक्ताग्रहतुल्याःसूतिकाश्चविज्ञेयाः अनुदितचक्रार्धयुतेरंतर्बहिरन्यथा
वदंत्येके लक्षणरूपाविभूषणायोगास्तासांशुभैर्योगात् क्रूरैर्विरूपदेहालक्षणहीनाःश्चरौद्रमलिनाश्च मिश्रैर्मध्यमरूपाबलसहितैः सर्वमेत

प्राच्यादिगृहक्रियादयोद्वौद्वौकोणगताद्विमूर्तयः शय्यास्वपिवास्तुवद्वदेत्पादैःषट्त्रिनवांत्यसंस्थितैः २१

द्वधार्यं बहिरंतश्चेति तत्र
यावंतोग्रहादृश्यंनेचक्रार्धेव्यवस्थितास्तावत्संख्याउपसूतिकागृहबाह्येवक्तव्याः यावंतश्चदृश्येचक्रार्धेव्यवस्थितास्तावत्संख्याआभ्यंतरेवक्तव्याः तत्रलग्न
स्ययावंतउदिताभागास्तथाद्वादशैकादशदशमनवमाष्टमाराशयस्तथाससमराशेर्लग्नोदितभागतुल्यांशादृश्यमर्धशेषमदृश्यमिति अन्यथापरेअपरेअ
न्येआचार्याअन्यथाऽन्येनप्रकारेणदृश्यचक्रार्धेअभ्यंतरगतावर्णयंतिअदृश्येबाह्यस्थाज्ञेयाः तथाचजीवशर्माउदयशशिमध्यस्थैर्ग्रहैःस्युरुपसूतिका
स्तत्र उदगर्धस्थैर्बाह्येदक्षिणागेरंतरेज्ञेयाः एतदाचार्यस्यनाभिप्रेतं यतोनेनैवस्वल्पजातकेउक्तं शशिलग्नांतरसंस्थाग्रहतुल्याःसूतिकाश्चवक्तव्याःउदग
र्धेभ्यंतरगाबाह्याश्चक्रस्यदृश्यार्धे अत्रचायुर्दायविधिनास्वतुंगवक्रोपगतैस्त्रिसंगुणमित्यादिनाद्वित्रिगुणत्वंकृत्वाग्रहस्थानवशादुपसूतिकानिश्चयःकार्यः

यदिबहुजनप्रसूतियोगानभवंति तथापिग्रहसंख्यासूतिकासंभवायत्रबहुजनप्रसूतियोगेनभवितव्यमिति २२ अथजातस्यस्वरूपादिज्ञानंदोध
केनाह लग्नेति जन्मकालेलग्नेयोनवांशकउदितस्तस्ययःस्वामीसलग्नवांशपः तत्तुल्यतनुस्तदाकारोजातोवक्तव्यः यथामधुपिंगलदृगित्यादि
अथवाजातकालेसर्वग्रहेभ्योयोग्रहोवीर्ययुतोबलवांस्तत्तुल्यतनुर्वावक्तव्यः यदिलग्ननवांशकस्थोराशिर्बलवान्भवतितदातदीशतुल्यातनुर्भवति
अथसर्वग्रहेभ्योयोवीर्यवान्ग्रहस्तत्तुल्यतनुरिति चंद्रसमेतइतियोनवांशः शशिनाचंद्रेणसमेतश्चंद्रोयस्मिन्नवांशकेस्थितइत्यर्थः तस्यनवां
शराशेर्योधिपतिःसचंद्रसमेतनवांशपतिः तस्ययोवर्णस्तद्वर्णोजातोभवति अत्रचवर्णारक्तःश्यामोभास्वरोगौरइति अन्येचंद्राक्रांतराशिवर्ण-

चंद्रलग्नांतरगतैर्ग्रहैःस्युरुपसूतिकाः बहिरंतश्चचक्रार्धेदृश्यादृश्येन्यथापरे २२

मेवाहुः यथारक्तःश्वेतःशुकतञ्जनिभइत्यादि अत्रशुकवर्णस्यासंभवादयुक्तमेतत् एतच्चवर्णादिजातिकुलदेशान्बुध्वावक्तव्यं उक्तंच बलि
नःसदृशीमूर्तिर्बुध्वाजातिकुलदेशान्इति कादिविलग्नविभक्तभगात्रइति आधानविधिनाशीर्षादीनामवयवानांह्रस्वदीर्घत्वंनिरूपयति का-
दिभिर्विलग्नभैर्लग्नराशिभिःविभक्तानिगात्राणि यस्यसःकादिविलग्नविभक्तभगात्रः तत्रलग्नादयोराशयःकादिषुशिरःप्रभृतिकालगात्रेषुपरि
कल्प्याः यथाकालांगानि तत्रलग्नंशिरः द्वितीयोराशिर्वक्त्रं तृतीयउरः चतुर्थोहृत् पंचमःक्रोडःषष्ठःकटिः सप्तमोबस्तिः अष्टमःशिश्नगुदे
नवमोवृषणौ दशमऊरू एकादशोजानुनी द्वादशोजंघापादौ अत्रचराशीनांप्रमाणमुक्तं पूर्वार्द्धविषयादयइति तत्रयत्रांगस्थेदीर्घराशौदीर्घ
राश्यधिपोग्रहोव्यवस्थितोभवतिसदीर्घत्वत् तदंगतस्यदीर्घंवक्तव्यम् तथाचसत्यः दीर्घाधिपतिर्दीर्घोग्रहःस्थितोवयवदीर्घत्वद्भवति अर्थादे

वाल्पप्रमाणराशौव्यवस्थितस्तदंगाल्पहृद्भवति दीर्घराश्यधिपोऽल्पराशिव्यवस्थितः समध्यमहृत् अल्पराश्यधिपोदीर्घराशौव्यवस्थितोंगमध्यमहृत्
यत्रांगराशौबहवोव्यवस्थितास्तत्रबलवद्ग्रहवशाद्वाच्यं यत्रनकश्चिद्व्यवस्थितः तत्रराशिप्रमाणतएवांगंवाच्यं २२ इतिसूतिकाप्रकरणं
अत्रैवसूतिकाध्यायेजातस्यव्रणमशकादिनिरूपणार्थमंगप्रकरणमारभ्यते तत्रलग्नप्रथमद्वितीयतृतीयद्रेष्काणवशेनप्रथमद्वितीयतृतीयशरी
रभागपरिच्छेदः तत्रशिरःप्रभृतियावद्वक्त्रंप्रथमोंगविभागः शिरोधस्ताद्यावन्नाभिःतावद्द्वितीयः तदधस्तात्तृतीयः तेषामंगविभागानांराशिवि
भागंशार्दूलविक्रीडितेनाह कंदृगिति त्रिभिःप्रकारैस्त्रिधा त्रिभिर्द्रेष्काणभागैस्त्रिधाशरीरप्रविभागः तत्रलग्नस्यप्रथमद्रेष्काणेउदयति
प्रथमोमूर्धाद्यंगविभागः द्वितीयेद्रेष्काणेउदयति कंठपूर्वकोद्वितीयोंगविभागः तृतीयेद्रेष्काणेउदयति बस्तिपूर्वकः तृतीयः तत्राप्यंगादि

लग्नतवांशपतुल्यतनुःस्याद्वीर्ययुतग्रहतुल्यतनुर्वा चंद्रसमेतनवांशपवर्णःकादिविलग्नविभक्तभगात्रः २३

भागेवामदक्षिणवर्त्यवयवज्ञानंकथमित्याह वामसुदितैरिति राशिभिरुदितैःदृश्यभागावस्थितैर्वामोंगविभागः लग्नस्योदितभागाः तथा
द्वादशैकादशदशनवमाष्टमाः तथासप्तमस्यराशेर्लग्नोदिततुल्यभागाः एषभागोदितः शेषोनुदितः अर्थादनुदितैरदृश्यैर्दक्षिणइति तत्रल
ग्नानुदितभागास्तथा द्वितीयतृतीयचतुर्थपंचमषष्ठाः सप्तमराशेर्लग्नोदिततुल्यभागाः एवंस्थितेलग्नप्रथमद्रेष्काणोदयोलग्नराशिः कंशिरःक
ल्पनीयं लग्नाद्द्वितीयद्वादशेदृक्चक्षुषी तत्रद्वितीयोदक्षिणमक्षि द्वादशोवामं तृतीयैकादशौश्रोत्रे तत्रतृतीयोदक्षिणं एकादशोवामम्
चतुर्थदशमौनासापुटौ चतुर्थोदक्षिणं दशमोवामं पंचमनवमौकपोलौ पंचमोदक्षिणः नवमोवामः षष्ठाष्टमौहनू षष्ठोदक्षिणं अष्टमोवामं

सप्तमोवक्त्रंमुखं एवंराश्याद्युपलक्षितः प्रथमोंगविभागः तेकंगंशकइति अथद्वितीयोद्रेष्काणोदयः कंगद्येद्वितीयेंगविभागेपरिकल्प्यः तद्यथा लु
ग्नंकंठेगलकः द्वितीयद्वादशौस्कंधौ तत्रद्वितीयोदक्षिणस्कंधोद्वादशोवामः तृतीयैकादशौबाहू तत्रतृतीयोदक्षिणएकादशोवामः चतुर्थदशमोपा-
र्श्वे तत्रचतुर्थोदक्षिणंदशमोवामं पंचमनवमौहृद्भागौ तत्रपंचमोदक्षिणः नवमोवामः षष्ठाष्टमौक्रोडउदरभागौषष्ठोदक्षिणः अष्टमोवामः
सप्तमोनाभिरिति नाभिग्रहणमुदरोपलक्षणार्थं एवंद्वितीयोंगविभागः वस्तिःशिश्नगुदेति लग्नद्रेष्काणेतृतीयेउदयातितेएवंहोरादयस्तृतीयेंग
विभागेपरिकल्प्याः तद्यथा लग्नंवस्तिः नाभिलिंगयोर्मध्यभागः द्वितीयद्वादशौशिश्नगुदे तत्रद्वितीयोदक्षिणभागः द्वादशोवामः ततोनंतरं

कंदृक्छ्रोत्रनसाकपोलहनवोवक्त्रंचहोरादयस्तेकंठांसकबाहुपार्श्वहृदयंक्रोडानिनाभिस्ततः ब
स्तिःशिश्नगुदेततश्चवृषणावूरूततोजानुनोजंघेंघ्रित्युभयत्रवाममुदितैर्द्रेष्काणभागैस्त्रिधा २४

तृतीयैकादशौवृषणौतृतीयोदक्षिणः एकादशोवामः चतुर्थदशमोऊरूचतुर्थोदक्षिणः दशमोवामः पंचमनवमौजानुनीपंचमोदक्षिणः नवमोवामः
षष्ठाष्टमौजंघेषष्ठोदक्षिणजंघाअष्टमोवामजंघा सप्तमःपादद्वयमिति २४ अथअंगज्ञानप्रयोजनंशार्दूलविक्रीडितेनाह तस्मिन्पापयुतइति
तत्रप्रथमद्रेष्काणेजातस्यशिरोंगविभागोद्वितीयद्रेष्काणेजातस्यकंठाद्यंगविभागः तृतीयद्रेष्काणेजातस्यबस्त्याद्यंगविभागः तस्मिन्पापयुते-
ति यत्रांगराशौपापग्रहसंयुक्तेतत्रांगेव्रणंविस्फोटकादिछिद्रंमशकादिचिह्नमादिशेत् तस्मिन्पापयुतेंगराशौपापग्रहसंयुतेशुभसंयुतेदृष्टे
सौम्यग्रहसंयुक्तेऽवलोकितेवातद्राश्युपलक्षितेंगेलक्ष्मादिशेत् मशकादिचिह्नंवाच्यं स्वर्क्षांशइति सएवग्रहोव्रणमशकादिकर्तास्वर्क्षेस्वराशौ

स्तनवांशकेवास्थितोभवति स्थिरराशौस्थिरांशकेवास्थितस्तदाव्रणंमशकादिकंसहजोत्पन्नंतस्यजंतोर्भवति अन्यथोक्तविपर्यस्थेआगंतुकोजातस्योत्त
रकालेकेनचिन्निमित्तेनवक्ष्यमाणेनस्वदशाकालेएववक्तव्यं आगंतुकस्यव्रणादेर्ग्रहवशेनतस्मिन्निमित्तमाह मंदेश्मानिलजइति मंदेशनैश्चरे व्रण-
कर्तृत्वेप्राप्तेन दृषणाद्यश्मनापाषाणहेतुकोऽनिलजोवातव्याधिहेतुकोवावक्तव्यः भौमस्यव्रणस्यकर्तृत्वेप्राप्तेऽग्निशस्त्रविषजोऽग्निहेतुकः शस्त्रहेतुको
विषहेतुकोवावक्तव्यः बुधेभूभवःभूस्थितपाताद्दुच्छ्रितपाताद्भूम्यभिघातहेतुकोलोष्टप्रहारहेतुकोवा सूर्येरवौकाष्ठप्रहारहेतुकश्चतुष्पदप्राणिहेतुको
वावक्तव्यः हिमगोश्चंद्रेशृंग्यब्जजः शृंग्यभिघातहेतुकः शृंगैर्विध्यतेयस्यप्राणिनः सशृंगी तज्जातोअब्जजोवाजलप्राणिहेतुकोवावक्तव्यः अन्यैः

**तस्मिन्पापयुतेव्रणंशुभयुतेदृष्टेचलक्ष्मादिशेत्स्वर्क्षांशेस्थिरसंयुतेषुसहजःस्यादन्यथागंतुकः मंदे**
**श्मानिलजोग्निशस्त्रविषजोभौमेबुधेभूभुवः सूर्येकाष्ठचतुष्पदेषुहिमगौशृंग्यब्जजोन्यैःशुभम् २५**

शुभं अन्येग्रहायत्रांगदेशास्थाभवंति तत्रशुभाव्रणादिकरानभवंति तत्रादशेषेगुरुसितौतत्किंबहुवचनंउच्यते बुधःपापयुक्तोव्रणकरः क्षीणश्चंद्रमास्तथा
ततोन्यैःशुभमित्युक्तं २५ अथव्रणज्ञानंहारिण्याह समनुपतिताइति यस्मिन्भागेवामेदक्षिणेवात्रयः सबुधाग्रहाः अथान्येग्रहाश्चतुर्थेनबुधेनस
हिताःसमनुपतिताःसमाश्रितास्तत्रांगेपूर्वोक्तव्रणादेर्नियमान्निश्चयादवश्यंप्राप्तिर्भवति शुभेष्वशुभेषुवा तेग्रहाः सबुधाः शुभाः सौम्याः अशुभाः
पापावाभवंति तथापितत्रांगेतस्यव्रणावाप्तिर्वक्तव्या तेषांमध्याद्योबलीसस्वदशामवाप्यकरोति व्रणकृदिति लग्नात्षष्ठेस्थाने अशुभः पापोग्रहोव्यव
स्थितोदेहेशरीरेव्रणकृद्भवति कस्मिन्स्थानेतनौभेसमाश्रिते तनोर्लग्नात्षष्ठस्थोराशिः कालांगानीत्यनेनदर्शितांगविभागेयस्मिन्भवतितस्मिन्

यारसस्योपलब्धेः आस्यग्रहणंचान्नकृतानुरोधीकृतं आग्नेयीआग्नेयंगुणंरूपमभिव्यंजयति दृष्यानुमेयंवायवी वायव्यंस्पर्शगुणमभिव्यंजयति त्वगनुमेयंस्पर्शेनोपल
भ्यते नाभसी नाभसंगुणंशब्दमभिव्यंजयति श्रवणानुमेयंकर्णोपलभ्यं एतदुक्तंभवति यदाशुभगंधः पुरुषोभवति तदास्यबुधकृतापार्थवीछायाज्ञेया यदामि
ष्टरसभोजीभवतितदास्यचंद्रशुक्रकृताछायाज्ञेया यदातीवरूपवान्सुकांतःपुरुषोभवति तदासूर्यभौमकृताआग्नेयीछायाज्ञेया यदास्पर्शेनमृदुर्भवति त-
दाशनेश्वरकृतावायवीछायाज्ञेया यदास्यवचनंकर्णयोःसुखकरंभवतितदाजीवकृतानाभसीछायाज्ञेया छायाविशेषलक्षणमाचार्येणसंहितायामभिहितं
तथाच छायाशुभाशुभफलानिनिवेदयंतीलक्ष्यामनुष्यपशुपक्षिषुलक्षणज्ञैः तेजोगुणान्बहिरपिप्रविकाशयंतीदीपप्रभास्फटिकरत्नघटस्थितेव स्निग्धाद्विज

छायांमहाभूतकृतांचसर्वेभिव्यंजयंतिस्वदशामवाप्य कंब्वग्नि
वाय्वंबरजान्गुणांश्चनासास्यदृक्त्वक्छ्रवणानुमेयान् ॥२१॥

त्वग्रवरोमकेशाछायासुगंधाचमहीसमुत्था तुष्ट्यर्थलाभाभ्युदयान्करोति धर्मस्यचाहन्यहनिप्रवृद्धिं स्निग्धासिताचहरितानयनाभिरामासौभाग्यमार्दवसुखाभ्यु
दयान्करोति सर्वार्थसिद्धिजननीजननीवचाप्याछायाफलंतनुभृतांशुभमाददाति चंडाधृष्यापद्महेमाग्निवर्णायुक्तंतेजोविक्रमैःसप्रतापैः आग्नेयीतिप्राणि
नांस्याज्जयायक्षिप्रंसिद्धिंवांछितार्थस्यधत्ते मलिनपरुषकृष्णापापगंधानिलोत्थाजनयतिवधबंधव्याध्यनर्थार्थनाशं स्फटिकसदृशरूपाभाग्ययुक्तात्युदारा
निधिरिवगगनोत्थाश्रेयसांस्वच्छवर्णा २१ अत्रचवायव्यांछायांवर्जयित्वासर्वास्वेवछायासु शुभमशुभंफलमुक्तंतत्कथं शुभफलेयमशुभफलेयमिति
तद्दशाज्ञायते तद्ज्ञानमंतरात्मनःस्वरूपंमालिन्याह शुभफलमिति शुभफलंददातियःसशुभफलदः शुभफलदस्यग्रहस्ययादशातस्यांअंतरात्मा

स्वदेहस्थः परमात्माचित्स्वरूपः तादृगेवशुभोभवति पुरुषस्यतस्यचच्छायादर्शितग्रहदशाकालेबहुविधमनेकप्रकारंसौख्यंसुखभावमर्थागमंधनलाभंचजनयत्युत्पा
दयति अथवादेवाशुभदशायांपुरुषस्यांतरात्माप्यशुभोभवति तत्रच्छायादर्शितग्रहजातातादृगेवफलदा सावांसौख्यमनर्थागमंचबहुप्रकारंजनयति मिश्रायांमि
श्रांच यात्रायांचवक्ष्यति निमित्तानुचरंसूक्ष्मंदेहेंद्रियमहत्तरं तेजोत्थेनच्छरीरस्थंत्रिकालफलविन्नृणां प्रीतयेनमनोनार्थेनासिद्धावभिनंदति तस्मात्सर्वा-
त्मनायातुरनुमेयंयस्यामनः शुभाशुभानिसर्वाणिनिमित्तानिस्युरेकतः एकतश्चमनः शुद्धिःस्तद्विशुद्धिर्जयावहाइतिकथितफलविपाकैरिति ग्रहाणांदशा-
सुयानिफलानिशुभान्यशुभानिवाकथितान्युक्तानितानियःपुरुषोभुंक्ते तस्यपुरुषस्यतद्ग्रहदशावर्ततेइतिज्ञेयं एतदुक्तंभवति यादृशंफलंशुभमशुभंवापुरु

**शुभफलददशायांतादृगेवांतरात्माबहुजनयतिपुंसांसौख्यमर्थागमंच**
**कथितफलविपाकैस्तर्कयेद्वर्त्तमानांपरिणमतिफलोक्तिःस्वप्नचिंतास्ववीर्यैः २२**

षस्योपलभ्यते तच्चयस्यग्रहस्यदशायांपठितं सातस्यदशानरस्यवर्ततइतिज्ञेयं एवंवर्त्तमानांदशांतर्कयेल्लक्षयेदित्यर्थः एवंछायावशेनांतरात्मावशेनफलप्र
क्तिवशेनवागणितस्यजातकस्यवर्तमानांदशांवदेत् अथसौरदशायामशुभायांव्यंगत्वमुक्तं नचशुभायांअशुभायामथैनेकेषांव्यंगत्वंदृष्टं शुक्रदशायांशुभा
यांनिधिप्राप्तिरुक्तानचसापिदृष्टातदर्थमाह परिणमतिफलोक्तिरिति अवीर्यैःबलहीनैःग्रहैःफलानियानिशुभान्यशुभानिवादत्तानितत्फलोक्तिःफलप्राप्तिः
स्वप्नेस्वप्नावस्थायांपरिणमत्यनुभूयते चिंतायांमनोरथेनवेति केचिच्छुभफलददशायांतादृगेवांतरारव्याइतिपठंति पर्गेत्वेवंव्याचक्षते यथाशुभायांद
शायामंतरारव्यांतर्दशाशुभायदिभवति तदाबहुजनयतिपुंसांसौख्यमर्थागममिति अथवादेवाशुभायांदशायामशुभांतर्दशाअसौख्यमनर्थागमंचबहु

जनयति अनेनव्याख्यानेनशुभायामशुभायांचशुभाशुभानिभवंति मिश्रफलंप्रयच्छंति नचैतदिष्यते यस्मादुक्तं एकर्क्षगोर्द्धमपहृत्यददातितुस्वमिति अत्रदशा पतेः फलमपहृत्यांतर्दशापतिरेवस्वंफलंददातीतिज्ञेयं अन्यथापहृत्येतिनिरर्थकंस्यादिति तस्मात्पूर्वपाठश्रेयान् द्वितीयःप्रमादपाठः प्रथमपाठेनविनाछायां शुभाशुभत्वमनुमातुंनशक्यतइति २२ अथैकग्रहदत्तयोः फलयोः सदृशयोर्नाशोभवति भिन्नदत्तानांबहूनामपिपक्तिरेवभवतीत्येतद्वसंततिलकेनाह एकग्रहस्येति सर्वाण्येवफलानि नाभसवर्ज्यंस्वदशायांग्रहः प्रयच्छतीत्युक्तं तत्रैकेनग्रहेणयदासदृशंविरुद्धंफलद्वयंदत्तंभवति तस्मिन्सदृशेतुल्येद्वयोःफलवि रोधेसतिनाशोभवति तस्यफलद्वयस्यवदेद्ब्रूयात् कीदृशंनाद्विरुद्धमित्यत्रोच्यते यथा कश्चिद्ग्रहः कयापियुक्त्यादशाफलादिनासुवर्णदोभवति सएवा-

एकग्रहस्यसदृशेफलयोर्विरोधेनाशंवदेद्यदधिकंपरिपच्यतेतत् ना
न्योग्रहःसदृशमन्यफलंहिनस्तिस्वांस्वांदशामुपगताःस्वफलप्रदाःस्युः२३

न्ययायुक्त्याअष्टवर्गफलयोगफलदृष्टिफलभावफलानामन्यतमेनसुवर्णापहारीभवति तदाफलद्वयेऽपिसुवर्णसंबंधोस्तीतिसादृश्यंस्वर्णदानापहारिणाविति विरोधः एवमेकस्यग्रहस्यसदृशेफलयोःविरोधेनाशंवदेत् नसुवर्णलाभोनचापहानिरिति यदधिकंपरिपच्यते ततएकेनापिग्रहेणफलद्वयंदत्तमन्यरूपंतयोः मध्याद्यदधिकंतत्परिपच्यतेभवति यथाकश्चिद्ग्रहोनिर्दिष्टप्रकारद्वयेनसुवर्णदः सएवप्रकारेणैकेनसुवर्णापहारीतदाद्वयोरधिकत्वात्तद्दानस्यसुवर्णं ददात्येव नापहरति अथवाप्रकारद्वयेनसुवर्णापहारी प्रकारेणैकेनसुवर्णदः तदापहरणस्याधिकत्वादपहरत्येव अथवासुवर्णापहारीरूप्यदश्च तथापिद्वेअसदृशेअसदृशत्वादधिकंपरिपच्यते सुवर्णापहारीरूप्यदश्चभवतिइतिकेचित् नान्योग्रहइति अन्येनग्रहेणदत्तंसदृशंविरोध्यपिफलंना

न्योग्रहोपिहिनस्त्यपहरति यथाकश्चिद्गृहः सुवर्णदोभवत्यन्यश्चसुवर्णापहारी तदातत्रसुवर्णदः स्वदशायांसुवर्णंददाति स्वदशायांसुवर्णापहारीचापहर
ति अनेनैतदुक्तंभवति यथैकग्रहस्यसदृशफलयोः विरोधेसमप्रजन्मांतरेपिफलनाशंवदेत् अन्यत्रविरुद्धयोरपिफलयोःनाशंनवदेत् यतःसुवर्णदोग्र
हः स्वामात्मीयांदशामुपगतःप्राप्तः सुवर्णलाभंकरोति सुवर्णापहारीस्वदशामुपगतःप्राप्तःसुवर्णमपहरति एतदष्टकवर्गफलंविनाशयत स्तत्रैकस्य
ग्रहस्यफलसदृशयोरपितुल्यसंख्ययोःफलयोर्नाशोभविष्यति तथाचभविष्यति तथातत्रैवप्रतिपादयिष्याम इति २३ इतिश्रीभट्टोत्पलविरचि
तायांबृहज्जातकविवृत्तौदशांतर्दशाध्यायोष्टमः ८ अथाष्टकवर्गाध्यायोव्याख्यायते तत्रांतर्दशाफलमिति पूर्वमेवोक्तंतत्प्रदर्श्याधुनास्थि

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातक
विवृत्तौदशांतर्दशाध्यायोऽष्टमःसमाप्तः॥

रस्याष्टकवर्गफलस्यावसरः लग्नाष्टमाः सर्वेएवग्रहास्तेभ्यः सकाशादेकैकस्यग्रहस्यचारवशाद्राशौविचरतः शुभाशुभंफलमष्टकवर्गेनिरूप्यते तत्रा
दावेवार्काष्टकवर्गंशार्दूलविक्रीडितेनाह स्वादर्कइति यत्रराशौजन्मसमयेपुरुषस्यादित्यःस्थितः सएवतस्यस्वस्थानमुच्यते एवमन्येषामपिग्र-
हाणांज्ञेयम् योयत्रव्यवस्थितः सएवतस्यस्वस्थानंतस्मात्स्वादर्कः प्रथमायबंधुनिधनद्व्याज्ञातपोद्यूनगः प्रथमैकादशचतुर्थाष्टमद्वितीयदशमनव
मसप्तमेषु १ ११ ४ ८ २ १० ९ ७ एतेषांस्थानानांसंज्ञाःप्रागेवव्याख्याताः अतःपुनर्नोच्यंते एषामंकन्यासएवव्याख्यानमितिसर्वत्रज्ञेयम् एते-
षुस्थानेषुगतः स्वात्स्थानादर्कः सूर्यः शुभः इष्टफलदः अर्थादेवान्यस्थानेषशुभअनिष्टफलदः यतोवक्ष्यति इतिनिगदितमिष्टंनेष्टमन्यादित्यवं-

सर्वत्रज्ञेयं वक्रात्स्वादिव वक्रादंगारकात्स्वादात्मीयस्थानादिवशुभः येष्वेवस्वस्थानान्तेष्वेवांगारकात् १।११।४।८।२।१०।९।७ एतेष्वर्कोभौमाच्छुभः न द्भूदेवरविजाव् रविजात्सूर्यपुत्रात्तद्भूदेवयेष्वेवस्थानेषुस्वाच्छुभस्तेष्वेवसौरात् १।११।४।८।२।१०। ९।७ एतेषुसौरादर्कः शुभइति सर्वत्रानुवर्तते शुक्रात्स्मरात्यारिषुसएवार्कः स्मरात्यारिषुसप्तमद्वादशषष्ठेषुशुक्रात्शुभः ७।१२।६। जीवाद्धर्मसुतायशत्रुषु जीवा द्बृहस्पतिस्थानात् धर्मसुतायशत्रुषु नवमपंचमैकादशषष्ठेषुशुभः ९।५।११।६ दशत्र्यायारिगःशीतगोः शीतगोश्चंद्राव् दशत्र्यायारिगः दशत्रतीयैकादशषष्ठगःशुभः १०।३।११।६ एतेष्वेवांत्यतपः सुतेषुचंबुधात्शुभः एष्वेवप्रागुक्तेषुचंद्रस्थानेषुदशत्र्यायारिषुच शब्दात्तथांत्यतपः सुतेषुद्वादशनवपंचमेषुबुधाच्छुभः १५२

अथाष्टकवर्गाध्यायप्रारंभः स्वादर्कःप्रथमायबंधुनिधनद्व्याज्ञातपोद्यूनगोवक्रात्स्वादिवतद्भूदेवरविजा च्छुक्रात्स्मरात्यारिषुजीवाद्धर्मसुतायशत्रुषुदशत्र्यायारिगःशीतगोरेष्वेवांत्यतपःसुतेषुचबुधाल्लग्नात्सबंधंत्यगः १

१११।६।१२। ९।५ लग्नात्सबंधंत्यगः सहशब्देनप्रागुक्तानिचंद्रस्थानान्यनुकृष्यंते तेनांत्यतपः सुतस्थानानीति सर्वत्रपरिभाषातेनैतेषुचंद्रस्थानेषुदशत्र्यायारिषुसबंधंत्येषु चतुर्थद्वादशसहितेषुगतोलग्नादुदयाच्छुभः १०।३।११।६।४।१२ तथाचसत्यः स्वात्स्थानाद्दिवसकरस्तृतीयषष्ठांत्यभं-त्रिकोणानिहित्वेष्टः ३।६।१२।५ एतानिवर्जयित्वानान्येववराहमिहिरदर्शितानिस्थानानिजातानि १।११।४।८।२।१०।९।७ सौरस्यतुसहजारिसुतांत्यसंज्ञानिहित्वेष्टइत्यनुवर्तते ३।६।५।१२। एतानिवर्जयित्वातान्येववराहमिहिरदर्शितानिस्थानानिजातानि १।११।४।८।२।१०।९।७। चंद्राद्दशमैकादशतृतीयषष्ठोपगः शुभःसूर्यः १०।११।३।६ जीवात्रिकोणयोःषष्ठस्तथैकादशश्चेष्टः ९।५।६।११ प्रथमद्वितीयस

समचतुर्थनैधन ग तान्विनाराशीन्सौम्यादिस्थःसूर्यः १।२।७।४।८ एतानिवर्जयित्वातान्येववराहमिहिरप्रदर्शितानिस्थानानिजानाति १०।३।११।६।१२।९।५ कुजस्तुसदृशोर्कवृत्तेण १।११।४।८।२।१०।९।७ दशमेकादशषष्ठतृतीयगोत्यस्थचतुर्थगोलग्नात् १०।११।६।३।१२।४ शुक्रस्थानाद्रविः षट्सप्तम द्वादशेषु भवतीष्टः ६।७।१२ तथाचसूक्ष्मजातके केंद्रायाष्टद्विनवस्थर्कः स्वादार्किभौमयोश्चशुभः षट्सप्तांत्येषुसितात्षडायधीधर्मगोजीवात् उपचयगोर्कस्य द्यादुपचयनवमांत्यधीसुतः सौम्यात् लग्नादुपचयबंधुव्ययस्थितः शोभनःप्रोक्तः इतिआदित्याष्टकवर्गः १ अथचंद्राष्टकवर्गंशार्दूलविक्रीडितेनाह लग्नात्षडिति लग्नात्षट्त्रिदशायगः शशीचंद्रः लग्नादुदयात्षडित्यादिगः षष्ठतृतीयदशमैकादशेषुस्थानेषुशुभः ६।३।१०।११

लग्नात्षट्त्रिदशायगः सधनधीधर्मेषुचाराच्छशी स्वात्सास्तादिषुसाष्टसप्तमस्मरवेः षट्त्र्यायधी
स्थोयमात् धीत्र्यायाष्टमकंटकेषु शशिजाज्जीवाद्व्ययायाष्टगः केंद्रस्थश्चसितात्तुधर्म-
स्मरवधीत्र्यायास्पदानंगगः २

सधनधीधर्मेषुचाराच्छशीसहशब्देनप्रागुक्तान्येवस्थानान्यनुक्षिप्यंते शशीचंद्रः आराद्भौमादेषेवषट्त्रिदशायेषुधनधीधर्मसहितेषुद्वितीयपंचमनवमयुक्तेषुशुभः ६।३।१०।११। २।५।९ स्वात्सास्तादिषुआत्मीयस्थानादेष्वेवषट्त्रिदशायेषुसास्तादिषुसप्तमप्रथमसहितेषुशुभः शशी ६।३।१०।११। ७।१ साष्टसप्तस्मरवेरादित्यादेष्वेवस्थानेषुसाष्टसप्तस अष्टमसप्तमसंयुक्तेषु ६।३।१०।११।८।७ शुभः षट्त्र्यायधीस्थोयमात् यमात्सौरात् षट्त्र्यायधीस्थः षष्ठतृतीयैकादशपंचमस्थानस्थः शुभः ६।३।११।५ धीत्र्यायाष्टमकंटकेषु शशिजात् शशीजाद्बुधाद्बुधस्थानाद्धीत्र्यायाष्टमकंटकेषु पंचमतृतीयैकादशाष्टमकेंद्रेषुशुभः शशी ५।३।११।८।१।४

७।१० जीवाद्व्ययायाष्टगः केंद्रस्थश्च जीवाद्गुरुस्थानाद्व्ययायाष्टगः केंद्रस्थश्च द्वादशैकादशाष्टमकेंद्रस्थश्चशुभश्चंद्रः १२।११।८।१।४।७।१० सितात्तुधर्मसुतखधीव्ययायास्पदः नंगगः सिताच्छुक्रात्धर्मसुतखधीव्ययायास्पदानंगगेषु नवमचतुर्थपंचमतृतीयैकादशदशमसप्तमेषुशुभः ९।४।५।३। ११।१०।७ तथाचसत्यः षष्ठैकादशसप्तमतृतीयदशमादिसंस्थितश्चंद्रः स्वादिष्टः ६।११।७।३।१०।१ सौरस्यतुसहजारिसुतायसंस्थि तश्चशुभः ३।६।५।११ रिपुनिधनसहजास्तसमदशमेकादशसंस्थितः सूर्यात् ६।८।३।७।१०।११ लग्नात्तृतीयदशमारिलाभसंस्थितः शुभश्चंद्रः ३।१०।६।११ भात्सुतकर्मधनलाभधर्मारिपुराशिगः कुजादिष्टः ३।५।१०।२।११।९।६ जीवात्तृतीयषष्ठाद्विनवमसुतवर्जिते

वक्रस्तूपचयेष्विनात्सुतनयेष्वाद्यादिकेषूदयाच्चंद्राद्द्विगिवफलेषुकेंद्रनिधनप्राप्त्यर्थगः स्याच्छुभः
धर्मायाष्टमकेंद्रगोर्कतनयाज्ज्ञात्षट्त्रिधीलाभगः शुक्रात्षड्व्ययलाभमृत्युषुगुरोः कर्मात्यलाभारिषु ३

षिष्टः ३।६।२।९।५ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १२।११।८।१।४।७।१० प्रथमाद्वितीयषष्ठाष्टमांत्यवर्जेषु भार्गवादिष्टः १।२।६।८।१२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि ३।४।५।७।९।१०।११ षष्ठधननवमपश्चिमव र्ज्येषुबुधात्प्रशस्तश्च ६।२।५।९।१२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १।३।४।७।८।१०।११ तथाचसूक्ष्मजा तके शश्युपचयेषुलग्नात्साद्यमुनिः स्यात्कुजात्सनवधीस्थः सूर्यात्साष्टस्मरगस्त्रिषडायसुतेषुसूर्यसुतात् ज्ञात्केंद्रत्रिसुतायाष्टमगस्गुरोर्व्ययभवा ष्टकेंद्रेषु त्रिचतुःसुतनवदशसप्तमायगश्चंद्रमाः शुभः शुक्रात् इतिचंद्राष्टकवर्गः २ अथभौमाष्टकवर्गंशार्दूलविक्रीडितेनाह वक्रस्तू

पञ्चयेष्विनादिति वक्रोंगारकः इनादादित्यादुपचयेषुत्रिषडेकादशदशमेषुसतनयेषु पंचमस्थानसहितेषुसुभः ३।६।१०।११।५ आद्याधिकेषूदयाद्वक्रः शुभः उदयाल्लुग्नादेष्वेवोपचयेष्वाद्याधिकेषुप्रथमस्थानयुक्तेषुशुभः ३।६।१०।११।१ चंद्राद्दिग्विफलेषुचंद्रस्थानादेष्वेवोपचयेषुदिग्विफलेषुदशमस्थानफलवर्जितेषुतेनदशमस्थानेनशुभंनाप्यशुभंफलंकरोतीत्यर्थः ३।६।११ एतेषुशुभः केंद्रनिधनप्रास्यर्थगः स्वाच्छुभः स्वादात्मीयस्थानात्केंद्रनिधनप्रास्यर्थगः केंद्राष्टमैकादशद्वितीयगःशुभः १।४।७।१०।८।११।२ धर्मायाष्टमकेंद्रगोर्कतनयात् सौराद्धर्मायाष्टमकेंद्रगःनवमैकादशाष्टमकेंद्रगतःशुभः ९।११।८।१।४।७।१० ज्ञात्षट्त्रिधीलाभगः ज्ञात्बुधात् षट्त्रिधीलाभगः षष्ठतृतीयपंचमैकादशगतःशुभः ६।३।५।११ शुक्रात् षट्व्ययलाभमृत्युषुशुक्रस्थानात् षष्ठद्वादशैकादशाष्टमेषुशुभः ६।१२।११।८ गुरोःकर्मांत्यलाभारिषुगुरोःजीवाद्दशमद्वादशैकादशषष्ठेषुशुभः १०।१२।११।६ तथाचसत्यः द्वादशपंचमनवमतृतीयषष्ठान्विनाकुजस्त्विष्टः स्वस्थानात् १२।५।९।३।६ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १।२।७।१०।८।११।२ सौरस्यतुनवमाभ्यधिकेषुअनर्थेषुएष्वेवद्वितीयस्थानंविनानवमाभ्यधिकेषु ११।८।९।१।४।७।१० भौमस्तृतीयपंचमदशमैकादशारिपुस्थितःसूर्याद्दिष्टः ३।५।१०।११।६ चंद्रान्मध्यमोदशमषष्ठसहजलाभेषु१०।३।६।११ दशमैकादशषष्ठांत्यगःकुजः भूमिजःपूजितोगुरुस्थानात् १०।११।६।१२ षष्ठैकादशपंचमतृतीयगश्शुभःसौम्यात् ६।११।५।३ अंत्यायाष्टमषष्ठगःकुजःपूजितोशुक्रात् १२।११।८।६ प्रथमैकादशदशरिपुसहजोपगतश्चहोरायाः १।११।१०।६।३ तथाचस्वल्पजातके भौमःस्वादायस्वाष्टकेंद्रगःश्चायषट्स्तेषुबुधात्जीवाद्दशायशत्रुव्ययेष्विनादुपचयस्तेषु दयादुपचयतनुषुत्रिषडायेष्विंदुतःसमोदशमः चंद्रस्थानादुपचयेषुदशमवर्जितेषुशुभःदशमेऽशुभोपिनभवति ३।६।११ भृगुतोंत्यषडायेषु १२।६।११ असितात्केंद्रायनववसुषु १।४।७।१०।११।९।८ इतिभौमाष्टकवर्गः॥

अथबुधस्याष्टकवर्गंशार्दूलविक्रीडितेनाह द्व्याद्यायाष्टतपइति इंदुजोबुधः भृगुजाच्छुक्रात् द्व्याद्यायाष्टतपःस्मरेषु द्वितीयप्रथमैकादशाष्टमनवमचतुर्थेषु सप्तात्मजेषुतृतीयपंचमयुक्तेषुशुभः २।१।११।८।९।४।३।५ साज्ञास्तेषुयमारयोः एष्वेवद्व्याद्यायाष्टतपःस्मरेषुसाज्ञास्तेषु दशमसप्तमसहितेषुयमार योः शनैश्चरांगारकयोः यमात् २।१।११।८।९।४।१०।७ आराच्छुभः २।१।११।८।९।४।१०।७ व्ययरिपुप्राप्त्यष्टगोवाक्पतेः वाक्पतेःजीवात् द्वाद शषष्ठैकादशाष्टमगतःशुभः १२।६।११।८ धर्मायारिसुतव्ययेषुसवितुःसूर्यान्नवमैकादशषष्ठपंचमद्वादशेषुशुभः ८।११।६।५।१२ स्वात्सा द्यकर्मत्रिगः स्वादात्मीयस्थानादेष्वेवधर्मादिषुस्थानेषुसाद्यकर्मत्रिकेषु प्रथमदशमतृतीयसहितेषुगतःशुभः ८।११।६।५।१२।१।१०।३ षट्स्वाया

द्व्याद्यायाष्टतपःस्मरेषुभृगुजात्सप्तात्मजेष्विंदुजः साज्ञास्तेषुयमारयोर्व्ययरिपुप्राप्त्यष्टगोवाक्पतेः
धर्मायारिसुतव्ययेषुसवितुःस्वात्साद्यकर्मत्रिगः षट्स्वायाष्टस्मरवास्पदेषुहिमगोःसाद्येषुलग्नाच्छुभः ४

ष्टस्मरवास्पदेषुहिमगोश्चंद्रात् षष्ठद्वितीयैकादशाष्टमचतुर्थदशमेषुशुभः ६।२।११।८।४।१०। साद्येषुलग्नाच्छुभः एष्वेवषष्ठादिषुस्थानेषुसाद्येषुप्रथमस्थानसहि तेषुलग्नाच्छुभः ६।२।११।८।४।१०।१ तथाचसत्यः स्वात्स्थानाच्छशितन योद्वितीयसप्तमचतुर्थनिधनानिहित्वेष्टः २।७।४।८ एतानिवर्ज यित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १।३।५।६।९।१०।११।१२ सूर्यस्यतुलाभारिसुतांत्यनवमस्थः ११।६।५।१२।९ सुतसहजष ष्ठपश्चिमवर्जितेषुमंडलेषुबुधस्त्विष्टः सौराराभ्यांस्थानादविकल्पाच्छास्त्रनियमेन ५।३।६।१२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानि- जातानि १।११।४।२।८।९।१०।७ लग्नाच्छुक्रोयेषुप्रशस्यतेतेषुचंद्रजस्तस्य येषुस्थानेषुलग्नाच्छुक्रः शुभस्तेष्वेवस्थानेषुशुक्रस्थानाद्बुधःशुभोभवति शुक्रा

ष्टकवर्गः पठ्यते लग्नादिष्टसुखेकोरिपुसप्तमदशमपश्चिमान्हित्वा ६।७।१०।१२ एतानिस्थानानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १।२।३
।४।५।८।९।११ एतेषुस्थानेषुशुक्रस्थानाच्छुभोबुधः अंत्यायांत्याष्टमशत्रुभेषुजीवाद्बुधःश्रेष्ठः १२।११।८।६ दशमस्वलाभषष्ठाष्टमेषुचंद्राद्बुधश्चतु-
र्थेच १०।२।११।६।८।४ लग्नाच्चेषेशेद्यूनात्यनवमस्फुतसहजवर्ज्येषु ७।१२।९।५।३ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि
२।६।१०।११।८।४।१ एतेषुलग्नाच्छुभः तथाचस्वल्पजातके सौम्योंत्यषट्नवायात्मजेधिना १२।६।९।११।५ स्वाश्रितनु ३।१ दशयुतेषु १०
चंद्राद्व्रिरिपुदशायाष्टस्फुरवगतः २।६।१०।११।८।४ सादिषुविलग्नात् प्रथमस्फुरवायाद्विनिधनधर्मेषु १।४।११।२।८।९ सिताच्चिधीसमेतेषु ३।५
साशास्मरेषु १०।७ सौरारयोर्व्ययायारिपुवस्फुषु १२।११।६।८ गुरोः इतिबुधस्याष्टकवर्गः ४ अथजीवस्याष्टकवर्गंशार्दूलविक्रीडि
तेनाह दिगिति दिक्स्वाद्याष्टमदायबंधुषुकुजादंगिराइति अंगिराजीवः कुजादंगारकाद्दशमद्वितीयप्रथमाष्टमसप्तमेकादशच्चतुर्थेषु शुभः १०।२।१।८
७।११।४ स्वात्सत्रिकेष्वंगिराः स्वादात्मीयस्थानादंगिराः गुरुः पूर्वोक्तेषुदिक्स्वाद्यादिषुसत्रिकेषुतृतीयस्थानसहितेषुशुभः १०।२।१।८।७११।४।३ सू
र्यात्सत्रिनवेषुगुरुः शुभः सूर्यादादित्यादेषुवस्थानेषुप्रागुक्तेषुसतपस्तृतीयेषुतृतीयनवमस्थानाधिकेषुशुभः १०।२।१।८।७।११।४।३।९ धीस्वनवदि
ग्लाभारिगोभार्गवात् भार्गवाच्छुक्रात्पंचमद्वितीयनवमदशमैकादशषष्ठेषुशुभः ५।२।९।१०।११।६ जायायार्थनवात्मजेषुहिमगोः हिमगोश्चंद्रात् स
प्तमेकादशद्वितीयनवमपंचमेषुशुभः ७।११।२।९।५ मंदात्रिषट्धीव्ययेमंदात्सौरात् तृतीयषष्ठपंचमद्वादशेषुशुभः।३।६।५।१२ दिग्धीषट्स्वस्फुरवा
यपूर्वनवगोज्ञाद्गुरुः ज्ञाद्बुधाद्दशमपंचमषष्ठद्वितीयचतुर्थैकादशप्रथमनवमेषुशुभः १०।५।६।२।४।११।१।९ सस्मरश्चोदयात् उदयाल्लग्नादेषेव
स्थानेषुसस्मरेषुसप्तमस्थानसहितेषुशुभः १०।५।६।२।४।११।१।९।७ तथाचसत्यः येषुबुधस्यशशांकस्तेषुगुरुःपुष्कलस्वकात्स्थानात् चंद्राष्ट

कवर्गः एच्यते षष्ठधननवमपश्चिमवर्ज्येषुबुधात्मशस्तस्य ६।२।९।१२ एतानिस्थानानिवर्जयित्वाजातानि १।३।४।५।७।८।१०।११ अत्रपंचमद्वितीययोः स्थान
योः वराहमिहिरेणसहभेदः अत्रचवराहमिहिरेणयवनेश्वरमतमंगीकृत्यद्वितीयस्थानस्यशुभत्वमंगीकृतं तथाचयवनेश्वरः स्वस्थानगः स्थानस्वर्णमानमा
सिद्वितीयेचगुरुः करोति एवंद्वितीयेचशुभः विवाददैन्याध्वगदस्त्रिकोणेतस्मात्पंचमेनशुभः एवंवार्कादिष्टोनवमाप्ययिकेषुभवनेषु १।३।४।५।७।८।९।
१०।११ अत्रापिपंचमद्वितीययोः वराहमिहिरेणयवनेश्वरमतमंगीकृतं तथाचयवनेश्वरः स्थानेरवेर्बुद्धिसल्लद्धनानिकरोति जीवोधनदोद्वितीये एवंद्वितीये
शुभत्वाद्वराहमिहिरेणांगीकृतं रुजापीडाध्वदारिद्र्यसूरिः स्यात्पंचमेतस्मात्पंचमेनशुभः आत्मसहजेषु सहजभवनंविनाकुजाच्चगुरुरिष्टः १।४

दिक्स्वाद्याष्टमदायबंधुषुकुजात्स्वात्सत्रिके धंगिराः सूर्यात्सत्रिनवेषुधीस्वनवदिग्लाभारिगोभार्गवात्
जायायार्थनवात्मजेषुहिमगोर्मदात्रिषट्धीव्ययेदिग्धीषट्स्वसुखायपूर्वनवगोज्ञात्स्मरश्चोदयात् ५

५।७।१०।११ अत्रापिपंचमद्वितीययोः वराहमिहिरेणसहभेदः अत्रापियवनेश्वरः गुरुः कुजस्थानगतोऽरिहंताद्वितीयगस्तुद्युतिहर्षदाता तस्माद्व
राहमिहिरेणद्वितीयस्थानमंगीकृतं जामित्रगोव्याध्यरिशोककारीएवंसप्तमस्थानंनांगीकृतम् द्वादशारिपुपंचमतृतीयसंज्ञेशुभः सौरात् १२।६।५।३
दशमैकादशनवमद्वितीयषट्पंचमेषुभृगोः जीवइष्टः १०।११।९।२।६।५ चंद्राज्जामित्रनवमसुतलाभकोशर्क्षेषुगुरुः शुभः ७।९।५।११।२
प्रथमद्वितीयपंचमचतुर्थधर्मारिलाभदशमस्थः सौम्याद्गुरुरिष्टः १।२।५।४।९।६।११।१० जीवोलग्नादेवमिष्टः सजामित्रः १।२।५।४।९।६।११।
१०।७ तथाचस्वल्पजातके जीवोभौमाद्यायाष्टकेंद्रगो २।११।८।१।४।७।१० र्कात्सधर्मसहजेषु २।११।८।१।४।७।१०।९।३ स्वात्सत्रिकेषु —

२ । ११ । ८ । १ । ४ । ७ । १० । ३ शुक्रान्नवदशलाभस्वधीरिपुषु ९ । १० । ११ । २ । ५ । ६ शशिनः स्मरत्रिकोणार्थलाभगः ७ । ९ ५ । २ । ११ स्त्रिरिपुधीव्ययेषुयमात् ३ । ६ । ५ । १२ नवदिक्खस्वायधीस्तायशत्रुषुज्ञा ९ । १० । ४ । १ । ५ । २ । ११ । ६ त्सकामगोलग्नात् ९ । १० । ४ । १ । ५ । २ । ११ ६ । ७ इतिजीवाष्टकवर्गः ५ अथशुक्रस्याष्टकवर्गंशार्दूलविक्रीडितेनाह लग्नादिति सितःशुक्रः लग्नादासुतलाभरंध्रनवगः शुभः लग्नात्प्रभृति सुतस्थानंपंचमं यावत्तथालाभरंध्रनवगःसितःशुभः तेषुप्रथमद्वितीयतृतीयचतुर्थपंचमेकादशाष्टनवमेषुलग्नाच्छुक्रः शुभः १ । २ । ३ । ४ । ५ । ११ । ८ । ९ सांत्यः शशांकात्सितः शशांकाच्चंद्रादेषेवस्थानेषुसांत्येषुसव्ययेषु द्वादशस्थानाधिकेषुशुभः १ । २ । ३ । ४ । ५ । ११ । ८ । ९ । १२ स्वात्साज्ञेषुस्वा

लग्नादासुतलाभरंध्रनवगःसांत्यःशशांकात्सितःस्वात्साज्ञेषुखाभ्रधीनवदशच्छिद्राप्तिगःसूर्यजात् रं
ध्रायव्ययगोरवेर्नवदशप्राप्त्यष्टधीस्थोगुरोर्ज्ञाद्धीत्र्यायनवारिगस्त्रिनवषट्पुत्रायसांत्यःकुजात् ॥ ६॥

दात्मीयस्थानादेष्वेवस्थानेषुसाज्ञेषुदशमस्थानाधिकेषुशुभः १ । २ । ३ । ४ । ५ । ११ । ८ । ९ । १० खत्रिधीनवदशच्छिद्राप्तिगः सूर्यजात् सौराच्चतुर्थतृती-यपंचमनवमदशमाष्टमैकादशेषुशुभः ४ । ३ । ५ । ९ । १० । ८ । ११ रंध्रायव्ययगोरवेः रवेरादित्यादष्टमैकादशद्वादशेषुशुभः ८ । ११ । १२ नवदशप्राप्त्यष्ट धीस्थोगुरोः जीवान्नवमदशमैकादशाष्टमपंचमेषुशुभः ९ । १० । ११ । ८ । ५ ज्ञाद्धीत्र्यायनवारिगः ज्ञात्बुधात्पंचमतृतीयैकादशनवमषष्ठेषुशुभः ५ । ३ । ११ ९ । ६ त्रिनवषट्पुत्रायसांत्यः कुजात् कुजाद्भौमात्तृतीयनवमषष्ठपंचमैकादशेषुसांत्येषुअंत्येनद्वादशेनसहितेषुस्थानेषुशुक्रः शुभः ३ ९ । ६ । ५ । ११ । १२ तथात्रसत्यः स्वस्थानाद्गुणतनयः षट्सप्तमपश्चिमेतरेष्विष्टः ६ । ७ । १२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजा-

तानि १।२।३।४।५।८।९।१०।११ रिपुपलिकर्मवर्ज्येषुसितश्चंद्राच्चपुष्कलोनृणां ६।७।१० एतानिवर्जयित्वातान्येववराहमिहिरपठितानिजातानि १।२।३।
४।५।९।८।११।१२ अंत्योपांत्याष्टमगः सूर्यादिष्टस्तुभार्गवः कथितः १२।११।८ भौमादंत्योपांत्यतृतीयनवमस्रुतरिपुशशिगश्चैवं १२।११।३।९
।५।६ दशमैकादशनिधनत्रिकोणसंस्थोभृगुर्जीवात् १०।११।८।५।९ सौम्यात्स्रुतधर्मलाभसहजारिसंज्ञेषु ५।९।११।३।६ लग्नादिष्टः
शुक्रोरिपुसप्तमदशमपश्चिमान्हित्वा ६।७।१०।१२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि १।२।३।४।५।८।९।११
आद्यद्वितीयरिपुसप्तमांत्यवर्ज्येषुसौराच्च १।२।६।७।१२ एतानिवर्जयित्वातान्येववराहमिहिरपठितानिस्थानानिजातानि ३।४।५।८।९।१०।११

मंदः स्वात्त्रिस्रुतायशत्रुषुशुभः साज्ञांत्यगोभूमिजात्केंद्रायाष्टधनेष्विनादुपचयेष्वाद्येस्रुरवेश्चोदयात्
धर्मायारिदशांत्यमृत्युषुबुधाच्चंद्रात्त्रिषड्लाभगः षष्ठायांत्यगतःसितात्स्रुरगुरोःप्रान्त्यस्यधीशत्रुषु ७

तथाचस्वल्पजातके शुक्रोलग्नादास्रुतनवाष्टलाभेषु १।२।३।४।५।९।८।११ सव्ययश्चंद्रात् स्वात्साज्ञेषुरविस्रुतात्त्रिधीस्रुरवाप्तिनवकर्मरंध्रेषु व
स्वत्यायेष्वर्कान्नवदिग्लाभाष्टधीस्थितोजीवात् ज्ञात्रिस्रुतनवायारिप्रायस्रुतापोक्लिमेषुकुजादिनिशकराष्टकवर्गः ६ अथसौरस्याष्टकवर्गंशार्दूल-
विक्रीडितेनाह मंदः स्वात्त्रिस्रुतायशत्रुषुशुभइति मंदः सौरः स्वादात्मीयस्थानात्तृतीयपंचमैकादशषष्ठस्थानेषुशुभः साज्ञांत्यगोभूमिजात् भू
मिजाद्भौमादेषेवमायुक्तेषुसाज्ञांत्येषुगतः दशमद्वादशसहितेषुशुभः ३।५।११।६।१०।१२ केंद्रायाष्टधनेष्विनात् इनात्सूर्यात्केंद्रैकादशा
ष्टमद्वितीयेषुशुभः १।४।७।१०।११।८।२ उपचयेष्वाद्येस्रुरवेश्चोदयात् उदयाल्लग्नात्तृतीयषष्ठदशमैकादशप्रथमचतुर्थेषुशुभः ३।६।१०।११

११४ धर्मार्थारिदशांत्यमृत्युषुबुधात् बुधाद्बुधस्थानान्नवमेकादशषष्ठदशमद्वादशाष्टमेषुशुभः ९।११।६।१०।१२।८ चंद्रात्रिषड्लाभगः चंद्रस्थानात्तृतीय षष्ठैकादशेषुशुभः ३।६।११ षष्ठांत्यायगतःसितात् शुक्रस्थानात् षष्ठद्वादशैकादशेषुशुभः ६।१२।११सूरगुरोःप्रास्यंत्यधीशत्रुषु सूरगुरोःजीवादे कादशद्वादशपंचमषष्ठेषुशुभः ११।१२।५।६ तथाचसत्यः एकादशपंचमषष्ठगोर्कजःस्याच्छुभस्तृतीयेच ११।५।६।३ स्थानान्निशाकरस्यतुपंचमवर्ज्यंषष्ठेषेव १।३।६ येषात्मनोरविस्तेषुभास्करि स्तादृशोरविस्थानात् आदित्याष्टकवर्गेपठ्यते स्वात्स्थानाद्दिवसकरस्तृतीयषष्ठांत्यभात्रिकोणानि हित्वेष्टः ३।६ १२।५।९ एतानिहित्वाजातानि १।२।४।७।९।१०।११।८ अत्रवराहमिहिरादप्यधिकंनवमस्थानंतच्चयवनेश्वरविरोधित्वाद्वराहमिहिरेणे- त्युक्तं तथाचयवनेश्वरः पापप्रवृत्तिंनवमोविधत्तइति जीवादिष्टः षट्पंचमपश्चिमैकादशस्थश्च ६।५।१२।११ प्रात्सुतविजयलाभांत्यकर्मगः पुष्कलोनृणां भौमस्थानात्सौरिः ३।५।६।११।१२।१० षष्ठांत्योपांत्यगः शुक्राद् ६।१२।११ दशमैकादशषष्ठाष्टमांत्यनवमोर्कजः सौम्यात् १०।११ ६।८।१२।९ स्थानादिष्टोलग्नाच्छुभस्तुलग्नाद्यथासूर्यः आदित्याष्टकवर्गेपठ्यते दशमैकादशषष्ठतृतीयगोलग्नगश्चतुर्थश्चलग्नात् १०।११।६।३ १।४ तथाचस्वल्पजातके स्वात्सौरस्त्रिसुतायारिगः ३।५।११।६ कुजादंत्यकर्मसहितेषु ३।५।११।६।१२।१० स्वायाष्टकेंद्रगोर्का २।११ ८।१।४।७।१० च्छुक्रात्षष्ठांत्यलाभेषु ६।१२।११ त्रिषडायगः शशांका ३।६।११ दुदयात्ससुखाद्यकर्मगो ३।६।११।४।१।१० थगुरोः सुतष ट्व्ययायगो ५।६।१२।११ ज्ञाद्धयायारिपुदिङ्नवाष्टस्थः १२।११।६।१०।९।८ इतिसौरस्याष्टकवर्गः ७ अथाष्टकवर्गफलनिरू पणार्थमालिन्याह इतिनिगदितमिति इत्यनेनोक्तेनप्रकारेणयन्निगदितमुक्तंतदिष्टंनेष्टमन्यत् यदन्यंनिगदितंतत्सर्वमनिष्टमशोभनं एतदु- क्तंभवति स्वादर्कःप्रथमायबंधुनिधनइत्यनेनपाठेनयान्युक्तानिस्थानानितेषांश्रेष्ठंफलं विशेषादधिकफलविपाकमेवमिष्टानिष्टयोःफलयोःविशे

षात्संशोधनादधिकमिष्यते तत्फलविपाकंभवति एतज्जन्मभात् जन्मकालेयत्रस्थानेग्रहाः स्थिताः तस्मात्स्थानाच्छुभाशुभानि फलानिमयच्छंति
नतथातत्कालाक्रांतराशितः एतदुक्तंभवति यानिशुभस्थानान्याचार्येण पठितानि तानिबिंदूपलक्षितानिकार्याणि यान्यशुभानितानिरेखोपलक्षिता
नि तत इष्टानिष्टयोः विशेषमंतरंकृत्वा ऽवशिष्टस्यफलस्यपक्तिरिति यत्रबिंद्वष्टकंजातंतत्रशुभफलंसंपूर्णं यत्रचषड्बिंदवस्तत्रपादोनंफलं यत्र-
चबिंदुचतुष्टयंतत्रार्द्धफलं यत्रबिंदूद्वौतत्रपादफलं अशुभफलस्यैवंरेखाभिः कल्पनाकार्या तत्रचानिमिषपरमांशकेविलग्नइत्यत्रप्रयोगेजातस्यांगा
रकस्याष्टकवर्गउदाह्रियते तत्राचार्यपठितानिस्थानानिबिंदूपलक्षितानिकार्याणि अपठितानिअशुभानिस्थानानिरेखोपलक्षितानिकार्याणि तद्यथा

इतिनिगदितमिष्टंनेष्टमन्यद्विशेषादधिकफलविपाकंजन्मभात्तत्रदद्युः उपचय
ग्रहमित्रस्वोच्चगैःपुष्टमिष्टत्वपचयग्रहनीचारातिगैर्नेष्टसंपत् ८ इत्यष्टकवर्गः

ग्रहसंस्थामीनलग्नगतः शुक्रः मेषेद्वितीयस्थानस्थोर्कः तृतीयेवृषेचंद्रबुधौपंचमस्थानेकर्कटस्थोजीवः अष्टमेतुलायांशनैश्चरः एकादशेमकरस्थो
भौमः अनयाग्रहसंस्थयाप्रदर्श्यतेन्यासः वक्रस्तूपचयेधिनात्सतनयेबाधाधिकेभूदयाच्चंद्राद्विविफलेषुकेंद्रनिधनप्रास्त्यर्थगःस्वाच्छुभः धर्माया
ष्टमकेंद्रगोर्कतनयाज्ज्ञात्षट्त्रिधीलाभगः शुक्रात्षड्व्ययलाभ १२ मृत्युषुकुरोः कर्मांत्यलाभारिषु १ अष्टकुंडलिकान्यासः अथशुभाशुभफलवि-
शेषःक्रियते तत्रमेषेरेखापंचकंबिंदुत्रयंचजातं रेखात्रयंबिंदुत्रयंचापास्यद्वेरेखेजाते तस्मादेवंविधेयोगेजातस्यसदैवचारवशात्मेषस्थोंगारको
ष्टभागद्वयेनाशुभः वृषेरेखापंचकं बिंदुत्रयंजातं रेखात्रयंबिंदुत्रयंचापास्यद्वेरेखेजाते तस्माद्वृषस्थोभौमोष्टभागद्वयेनाशुभोभवति मिथु

नेरेरवापंचकंबिंदुत्रयंचजातं रेरवात्रयंबिंदुत्रयंचापास्य द्वेरेरवेजाते तस्मिन्मिथुनस्थोभौमोष्टभागद्वयेनाशुभः कर्कटेबिंदुचतुष्टयंरेरवाचतुष्टयंचजातम् तत्रनकिंचिदवशिष्यते तेननतत्स्थानंनशुभंनाप्यशुभं समत्वान्मध्यमः सिंहेबिंदुपंचकंरेरवात्रयंचजातं रेरवात्रयंबिंदुत्रयंचापास्यबिंदुद्वयंजातंच




तस्मात्तस्यसंदेवसिंहस्थोभौमोष्टभागद्वयेनशुभोभवति कन्यायांरेरवाषट्कंबिंदुद्वयंचजातं बिंदुद्वयंरेरवाद्वयंचापास्यरेरवाचतुष्टयंजातं तस्मात्कन्यास्थोभौमोष्टभागचतुष्टयेनाशुभः तुलायांरेरवात्रयंबिंदुपंचकंचजातं तत्ररेरवात्रयंबिंदुत्रयंचापास्यबिंदुद्वयंजातं तेनतुलास्थोभौमोष्टभागद्वयेनसंदेवशुभः वृश्चिकेरेरवासप्तकमेकोबिंदुःजातः तत्रबिंदुरेरवांचापास्यरेरवाषट्कंजातं तस्माद्वृश्चिकस्थोभौमोष्टभागषट्केनाशुभः धनुषिरेरवाषट्कंबिंदुद्वयंचजातं तत्ररेरवाद्वयंबिंदुद्वयंचापास्यरेरवाचतुष्टयंचजातं एवमष्टभागचतुष्टयेधन्विस्थोभौमोसदैवाशुभः मकरेरेरवात्रयंबिंदुपंचकंचजातं तत्ररेरवात्रयंबिंदुत्रयंचापास्यबिंदुद्वयंजातं तेनमकरस्थोभौमोष्टभागद्वयेनशुभः कुंभेरेरवाचतुष्टयंबिंदुत्रयंचजातं अत्रचंद्रस्थानात् दशमस्थानं — भौमस्यसमत्वादष्टमोबिंदुर्नजातस्तस्माद्रेरवात्रयंबिंदुत्रयंचापास्य एकारेरवाजातातस्मात्कुंभस्थोष्टमभागेनैकेनाशुभः मीनेरेरवापंचकंबिंदुत्रयंचजातं रेरवात्रयंबिंदुत्रयंचापास्यरेरवाद्वयंचजातं तस्मान्मीनस्थोभौमोष्टभागद्वयेनाशुभः अस्यतोशुद्धोस्थापना एवंशुभाशुभान्येकीकृत्याष्टोफलानिभवंति तेषांसंशोधनंकृत्वायदवशिष्यतेतदादेश्यं यत्ररेरवाचतुष्टयंबिंदुचतुष्टयंचभवति तत्रसममध्यस्थोग्रहोभवति यत्ररेरवाष्टकंतत्रातीवाऽशुभः यत्रबिंदूष्टकंतत्रातीवशुभः एवंजन्मकाला

क्रांतराशिवशेनसर्वग्रहाणामष्टकवर्गः कार्यः तथाचबादरायणः एकेनयः शुभस्यात्षड्भिः स्थानैः सपापदोषंभवति यस्तुचतुर्भिर्नेष्टः सर्वफलेकल्पनाप्येवं ननुपू
र्वमुक्तं एकग्रहस्यसदृशेफलयोर्विरोधेनाशंवदेद्यदधिकंपरिपच्यतेनतत् इतिनिगदितमिष्टंनेष्टमन्यद्विशेषादितिपुनरुक्तं उच्यते नैतत्पुनरुक्तं अष्टक
वर्गविनायदुक्तमेकग्रहस्यसदृशफलयोर्विरोधइति तत्रसदृशयोः फलयोर्विरोधेनाशोविज्ञेयः यथासएवग्रहः कयापियुक्त्यासुवर्णदोभवति सएवयु
क्त्यंतरेणसुवर्णापहारीतदानसुवर्णदोभवति नसुवर्णापहारीचेति यदधिकंपरिपच्यतेतत्रतत्रापि यदिकारणद्वयेनसुवर्णापहारीभवति कारणेनैकेन
सुवर्णदस्तथापिसुवर्णापहारीभवति नसुवर्णदः अथकारणद्वयेनसुवर्णदः कारणेनैकेनसुवर्णापहारि तथापिकारणद्वयस्याधिक्यात्सुवर्णदए
व एवंतत्रसदृशेफलयोर्विरोधेनाशंवदेन्नाशसदृशयोः इहतुपुनः सदृशेपिफलयोर्विरोधेन्नाशएवेति तद्यथा बादरायणयवनेश्वरादिभिरष्टकवर्गे-
भिहितं अस्यग्रहस्यस्थानादयंग्रहः स्वस्मिन्स्थानेतिष्ठमानइमानिशुभान्यशुभानिफलानिप्रयच्छतीति तत्रासदृशान्यपियदितानिफलानिभवंति
तथापितेषांशुभाशुभविरोधादेवनाशंवदेत् विशेषादधिकफलविपाकंजन्मप्राप्तन्नदद्युरिति यथाकश्चिद्ग्रहः केनचित्कारणेनसुवर्णदोभवत्य-
परेणरूप्यापहारीच तथाप्यसदृशयोरपिफलयोर्विरोधेदानहरणात्मकेनशुभोनाप्यशुभइतिकल्पनीयः एवंस्थानाष्टकाद्यत्रस्थानेबहुभिः शु-
भोभवत्यल्पेनाशुभः तत्रशुभाशुभफलविशेषंकृत्वाशुभमेवकल्पनीयं अनेनैवप्रकारेणस्थानसंज्ञामात्रेणस्थानशुभाशुभत्वमेवोक्तं नपृथ
क्फलनिर्देशोयवनेश्वरादियावत् यद्येवंचाष्टकवर्गप्रधानंतत्संहितायांगोचरफलेचंद्रस्थानात् किमितिपृथक्फलनिर्देशोवराहमिहिरेणकृतः
जन्मन्यायासदोर्कइत्येवमादि अत्रोच्यते तस्मादष्टकवर्गफलविशेषाद्यदतिरिच्यतेतदेववक्तव्यमिति तदेवपूर्वमत्ययनार्थमतिप्रसिद्धत्वाद्गोच
रस्यान्यमतमेवांगीकृत्वोक्तं तथाच यात्रायांतेनैवोक्तं यस्यगोचरफलप्रमाणतातस्यवेधफलमिष्यतेनवा प्रायशोबहुषुसंमतंत्विदंस्थूलमार्ग

फलदो ग्रहगोचरइति यवनेश्वरेणापि पृथक्पृथक्फलनिर्देशंकृत्वेनदेवाष्टकवर्गमंगीकृतं तथाचतद्वाक्यं फलाष्टवर्गेशुभपापलक्ष्मेसमानकल्पावफलौप्रदि
ष्टौ ज्यायांस्तु यस्तस्यफलंविधार्ययात्राविधानेन्नसमुद्भवेच पृथक्फलनिर्देशंकृत्वाबादरायणोप्यष्टकवर्गमेवाह कक्ष्याष्वेतुल्यसंख्येफलेचेत्स्या
तान्नाशः फलयोस्तत्रवाच्यः वाच्यापत्तिर्योतिरिक्तस्तयोः स्यात्स्थानेस्थानेकल्पनेयंप्रदिष्टा उपचयगृहमित्रस्वोच्चगैः पुष्टमिष्टमिति लग्नाच्चंद्राद्वा
यान्युपचयस्थानानि तथामित्रक्षेत्राणिस्वोच्चंच एतानिशुभस्थानानि शुभस्थानोपलक्षणानि उपलक्षणत्वात्स्वक्षेत्रंमूलत्रिकोणंचगृह्यते त
त्रलग्नाच्चंद्राद्वोपचयगतोग्रहः स्वक्षेत्रस्थः स्वोच्चस्थोमित्रक्षेत्रस्थोमूलत्रिकोणस्थश्च यदाशुभंफलंप्रयच्छति तदातीवपुष्टंफलंप्रयच्छति अत्र
चश्रीदेवकीर्तिः लग्नादुपचयसंस्थश्चंद्राद्वास्वगृहमूलतुंगस्थः मित्रक्षेत्रगतोवाफलमतिशयितःशुभंदद्यात् लग्नाच्चंद्राद्वान्यान्यपचयस्था
नानि तथाशत्रुक्षेत्रनीचानिचतान्यशुभानि तेषुस्थितोग्रहोयदाशुभफलंप्रयच्छति तदप्यतिनिकृष्टमिति अर्थादेवशुभग्रहः शुभंफलं
प्रयच्छति अशुभग्रहस्यश्चाशुभमल्पं किमेवंविधेषुग्रहस्यजन्मकालेस्थितिरन्वेष्या किंवाचारवशात्फलकल्पनेति उच्यते जन्मकालेक
थमेतत् उच्यते तत्रांतर्दर्शनतः तथाचदेवकीर्तिः अपचयराशौजीवेशत्रुक्षेत्रेचजन्मकालेस्याव् यस्तुसदद्यात्पापंफलमतिशयितोत्र
कालं यवनेश्वरश्च यस्तुस्वनीचारिगृहोपगोन्यैर्जितोरिदृष्टोल्पतनुर्विवर्णः सूतागमूज्जन्मपतोबलस्थेसजन्मगोवंध्यफलोनिरुक्तः ईष-
त्फलत्स्वोच्चमदिष्टदृष्टोमित्रर्क्षजन्मोपचयेबलीयान् योजातकेमूत्सतुजन्मसंस्थोदद्याच्छुभंनतत्शुभोप्यनिष्टं तथाचसत्यः जन्मन्युप
चयभवनेएकोग्रहोत्युपचयेषुपुष्टफलः अपचयभवनोपेताः पीडास्थानेत्यपचयायफलकालेतुपुनश्चंद्रवर्ज्यमन्योग्रहोबलवानेवशुभमशुभं
वापुष्टफलंप्रयच्छतीति चंद्रःशुभोपिबलरहितः पापफलोभवति अत्रचश्रीदेवकीर्तिः पुष्टमपुष्टंस्वफलंदद्यात्सबलोबलेनहीनस्तु ग्रहइ

वसर्वश्चंद्रः कष्टफलोबलविहीनश्च तथाचसत्यः स्नेहवपुरशुभैर्बलैर्विवर्जितः शत्रुभैरिसंदृष्टः ग्रहइवफलमनुदयाच्चंद्रस्तुयदीदृशःकष्टः
वराहमिहिरोप्यबलानांग्रहाणांफलदाने असमर्थानांयात्रायामाह नीचस्थाग्रहविजितारव्यभिभूताविरश्मयोन्हस्वाः भुजगाइवमंत्रहताभ
वंतिकार्याक्षमालग्ने यात्रायांयवनेश्वरोपि स्ववर्गसंस्थाबलिनोविशेषाग्रहायथोद्दिष्टफलप्रदाःस्युः नीचेजिताश्चारिगृहेल्पवीर्यास्तेमत्य
निष्टफलप्रवृत्तिं तत्रशास्त्रेषुयानिचान्यान्युच्चादिसंस्थानांशुभाशुभफलप्रवृत्तिप्रदर्शकानिनीचारिस्थानामशुभफलप्रदर्शकानि तानिज
न्मसमयेज्ञेयानि यानिचशुभानामशुभानांवाफलानिग्रहवशेनेवपुष्टिप्रदर्शकानितानि चारवशात्फलदानकालेग्रहस्यज्ञेयानीति ८ इतिश्री
भट्टोत्पलविरचितायांबृहज्जातकविवृतावष्टकवर्गाध्यायोनवमःसमाप्तः ९ अथातःकर्माजीवाध्यायोव्याख्यायते अनेनपुरुषेणकथंध
नमर्जयितव्यमित्यध्यायेस्मिन्निरूप्यते अत्रचप्रकारद्वयेनधनदाताग्रहोभवति लग्नाच्चंद्राच्चयोदशमस्थोग्रहःसधनदाताभवति अथल
ग्नचंद्रयोर्दशमस्थानेशून्येभवतस्तदालग्नचंद्रादित्यानांयेयेदशमराशयस्तेषांयेऽधिपतयस्तेषुनवांशकेषुपुरुषस्यजन्मकालेस्थितास्तेषां-
नवांशकानांयेग्रहाअधिपतयस्तेग्रहाः धनदातारोभवंति किंतुलग्नाच्चंद्राच्चयेदशमाग्रहाः तेअनेनप्रकारेणधनदातारोभवंति किंतुभेंद्वर्कास्प
दपतिगांशनाथाअनेनप्रकारेणेति तत्रादावेवलग्नाच्चंद्राच्चदशमस्थोग्रहोयेनप्रकारेणधनंददाति तथाभेंद्वर्कास्पदपतिगांशनाथायेनप्रका
रेणधनप्रदास्तत्प्रकारद्वयप्रदर्शनंप्रहर्षिण्याह अर्थाप्तिरिति होरेंद्वोः लग्नचंद्रयोः दिवाकराद्यैःसूर्याद्यैःग्रहैः दशमगतैः दशमस्था-
नाश्रितैः पित्रादिभ्योर्थाप्तिभिः धनप्राप्तिःविकल्पनीयाविचिंत्या तत्रपुरुषस्यजन्मसमयेलग्नाच्चंद्राद्वायद्यादित्योदशमस्थोभवतितदापितृतोर्थाप्ति-
र्भवति एवंचंद्रेलग्नाद्दशमगतेपित्तपलितः मातुःसकाशात् भौमेलग्नचंद्रयोर्दशमेसतिशत्रुतः रिपुतः बुधेमित्रात् सुहृत्तः गुरोर्भ्रातृतःसहजात् शुक्रे-

स्त्रीतः योषितः सौरेभृतकजनात्कर्मकरात् सेवकादित्यर्थः अथकश्चिल्लग्नाद्दशमेभवत्यपरश्चंद्रा त्तदास्वस्यांस्वस्यामंतर्दशायांद्वावपिस्वाभिहितफल
प्रदौभवतः नकेवलं यावच्चंद्राल्लग्नाच्चबहवोपियदिदशमस्थाभवंति तदासर्वएवस्वस्यांस्वस्यामंतर्दशायांस्वस्वप्रकारेणधनप्रदाभवंति अथलग्ना
च्चंद्राद्वानकश्चिद्दशमोभवति तदाकोर्थप्रदोभवति अतउक्तं भेंद्वर्कास्पदपतिगांशनाथवृत्त्या भंलग्नंइंदुश्चंद्रः अर्कः आदित्यः भंचेंदुश्चार्कश्च
भेंद्वर्काः तेभ्यः प्रत्येकस्यास्पदाख्योयोराशिः दशमइत्यर्थः तस्ययोधिपतिः ग्रहःसः यस्मिन्नवांशकेगतः स्थितस्तस्ययोनाथः स्वामीतस्ययाव
क्ष्यमाणावृत्तिः तयावृत्यातस्यधनप्रदोभवति एवंलग्नाच्चंद्रादर्कादपिवक्तव्यं केचिदेवंव्याचक्ष्यते यथालग्नाच्चंद्राच्चयदादशमस्थाग्रहाभवंतिन

अथकर्माजीवाध्यायोव्याख्यायते अर्थाप्तिःपितृपितृपतिशत्रुमित्रभ्रातृस्त्रीभृत
कजनाद्दिवाकराद्यैःहोरेंद्वोर्दशमगतैर्विकल्पनीयाभेंद्वर्कास्पदपतिगांशनाथवृत्त्या ॥१॥

दालग्नचंद्रयोःयोबलवान्तस्ययोदशमः सएवार्थप्रदोभवति भेंद्वर्काणांयोबलीतस्यास्पदपतिगांशनाथवृत्त्याएकएवार्थप्रदोभवतीति तदयुक्तं यस्मा-
द्बलग्रहणंनास्तितस्मादेवंज्ञायते सर्वेभ्यएवभवति पुरुषस्यबहुप्रकारधनागमदर्शनादिति तथाचभगवान्गार्गिः उदयाच्छशिनोवापियेग्रहाद
शमस्थिताः तेसर्वेर्थप्रदाज्ञेयाःस्वदशासुयथोदिताः लग्नार्कशशिनाथेभ्योदशमाधिपतिर्ग्रहः यस्मिन्नवांशेतत्कालंवर्ततेतस्ययःपतिः तद्वृत्याप्र
वदेद्वित्तंजातस्यबहवोयदा भवंतिवित्तदास्तेपिस्वदशासुविनिश्चितमिति १ भेंद्वर्कास्पदपतिगांशनाथवृत्याइतियदुक्तमधुनातांवृत्तिंप्रहर्षि
णीद्वयेनाह अर्कांशइति भेंद्वर्कास्पदपतिगांशनाथोर्कःयदाभवतितदातृणैःसुगंधैः कनकेनसुवर्णेनच ऊर्णयाआविकलोम्नाभेषजेन

औषधेन आदिशब्दात् भिषक्क्रियया रोगिणां परिचर्यया च धनमाप्नोति अथ चंद्रांशो भवति तदा कृष्याकर्षणेन जलजैः शंखमुक्ताप्रवालादिभिः अंगनाभिः स्त्रीभिः जलजानां क्रयविक्रयैः अंगनानां समाश्रयणैरेतैः धनमाप्नोति अथ कुजांशो भौमनवांशो यदा भवति तदा धातुभिः मृत्तिकादिभिः पक्वाभिः सुवर्णरूप्यताम्रादीनि भवंति ताभिः प्राप्नोति अथवा धातुभिः मनःशिलाहरितालहिंगुलकांजनप्रभृतिभिः अग्निनाग्निक्रियया प्रहरणैः खड्गचक्रकुंतचापतोमराद्यैः साहसैः असमीक्षितकार्यकरणैरथवा स्वबलक्रियारंभैः धनमाप्नोति अथ सौम्यांशो बुधनवांशको यदा भवति तदा लिपिगणितादिकाव्यशिल्पैः धनमाप्नोति लिप्यक्षरविन्यासेन गणितेन आदिग्रहणाद्व्याख्यानेन मंत्रादिप्रयोगैः काव्यक्रियया शिल्पैः चित्रपुस्तकपत्रच्छेदवाणमाल्य

अर्कांशे तृणकनकोर्णभेषजाद्यैश्चंद्रांशे कृषिजलजांगनाश्रयाच्च
धात्वग्निप्रहरणसाहसैः कुजांशे सौम्यांशे लिपिगणितादिकाव्यशिल्पैः २

रचनागंधयुक्तिप्रभृतिभिः धनमाप्नोति २ अथ जीवांशे द्वितीयमहर्षिण्याह जीवांशेति जीवांशे द्विजविबुधाकरादिधर्मैरिति अथ जीवांशको यदा भवति तदा द्विजेभ्यो ब्राह्मणेभ्यः विबुधेभ्यो देवेभ्यः पंडितेभ्यो वा आकरेभ्यः सुवर्णादीनां लवणादीनां अंजनादीनां गजादीनां च समुत्पत्तिस्थानेभ्यः आदिग्रहणात् क्रियावादेन धर्मैः यज्ञदानोपवासतीर्थगुरुसेवनादिभिः धनमाप्नोति अथ शुक्रनवांशको यदा भवति तदा मणिभिः वज्रपद्मरागेंद्रनीलप्रभृतिभिः रजतेन रूप्येण आदिग्रहणात् सर्वैर्लोहैः गोभिः तथा माहिषकर्मणि महिषेभ्यो वा साधुः माहिष्यः श्रेष्ठमाहिष्यैः धनमाप्नोति अथ सौरांशको यदा भवति तदा श्रमेण अध्वगमनादिकेन वधेन वध्यघातितया अथवा स्वशरीरताडनादिना . भारवाहनेन

नीचशिल्पैः स्वकुलानुचितैः कर्मभिः धनमाप्नोति एवंजातककालवशात्पुरुषस्य धनागमंज्ञात्वा कालानुकालं कर्मेशचारवशात् कर्मसिद्धिमाह कर्मेशा ध्युषितनवांशकर्मसिद्धिः कर्मणिईशः कर्मेशः लग्नाद्दशमराशिः तदधिपः कर्मेशः सचारवशाद्यस्मिन्नवांशके अध्युषितोभवति अवस्थितो भवति तस्य यः स्वामी तस्य यानिकर्माणि अर्कांशेतृणकनकोर्णभेषजाद्यैरित्यादीनि तत्समानानांसिद्धिर्भवति तानिप्रारब्धानिसिध्यन्तीति अत्रकेचित्कर्मे- शाध्युषितसमानकर्मसिद्धिरितिपठंति अत्रचनवांशग्रहणंनास्तिमहत्तत्वात्प्रागनुवृत्तेः नवांशकोव्याख्यायते तथाच भगवान्गार्गिः लग्नकर्माधि पोयस्मिन्नवांशेवर्ततेग्रहः चारक्रमेणतत्तुल्यांकर्मणांसिद्धिमादिशेत् ज्ञातजातकस्येदंक्रियाश्रयंकर्मकर्मेशाध्युषितनवांशकपतिकर्मणांयथादर्शि

जीवांशेद्विजविबुधाकरादिधर्मैःकाव्यांशेमणिरजतादिगोमहिष्यैः सौ
रांशेश्रमवधभारनीचशिल्पैः कर्मेशाध्युषितनवांशकर्मसिद्धिः ॥ ३॥

तानांप्रारब्धानांकालानुकालंसिद्धिर्वक्तव्यानान्येषामिति ३ अथधनागमज्ञानंप्रहर्षिण्याह मित्रारिस्वगृहगतैरिति चंद्रलग्नयोःयेदशमगाग्र हास्तद्भावेचयेग्रहोर्क्षास्पदपतिगांशनाथाः तेचयदिजन्मकालेमित्रगृहस्थिताभवंतितदास्वांतर्दशाकालेमित्रग्रहेस्थिताभवंति ततस्तस्मादेवमि त्रात् मित्रतः धनप्रदाभवंति अथारिगृहस्थाः शत्रुगृहगाभवंति तदारितएव अथस्वगृहस्थास्तदास्वगृहादेवधनप्रदाभवंति तुंगस्थेबलिनी ति यस्यपूर्वविधिनाभास्करः सूर्योधनप्रदोज्ञातः तस्मिंस्तुंगस्थेउच्चगेमेषप्राप्तेतद्वलिन्यन्यैर्बलैः कालबलाद्यैर्युक्तैस्तदासपुरुषः स्ववीर्याद्धनम र्जयति स्वविक्रमार्जितधनोभवतीत्यर्थः आयस्थैरिति सौम्यैः शुभग्रहैः जन्मन्यायसंस्थैरेकादशस्थानगतैः उदयधनाश्रितैश्चलग्नगैः

द्वितीयस्थानगतैर्वानैश्चबलसहितैः वीर्यवद्भिः जातःअनेकधाबहुभिःप्रकारैः स्वंधनंप्राप्नोतीति संचिंत्यनिश्चयःकार्योयेनयेनप्रकारेण धनार्जन-
माकांक्षतेतेनतेनप्रकारेणयत्नादवाप्नोतीत्यर्थः तथाचभगवान्गार्गिः धनदाजन्मसमयेमित्रारिस्वगृहोपगाः यस्यतस्यधनंदद्युर्मित्रारिस्वगृहोद्भवम्
धनदोभास्करोयस्यतुंगेबलसमन्वितः भवेज्जन्मनियस्यस्याद्वित्तमात्मोद्यमार्जितं लाभार्थलग्नगैःसौम्यैर्येनयेनैवकर्मणा धनार्जनंप्रार्थयतेतेनय
त्नात्समश्नुतइति ४ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृत्तौकर्माजीवाध्यायोदशमः १० अथातोराजयोगाध्यायोव्याख्याय
ते तत्रादावेवयवनानांजीवशर्मणश्चमतंवैतालीयेनाह त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवाभवंतिराजानः इतिसर्वजातकेषुप्रसिद्धं तत्रैताव-

मित्रारिस्वगृहगतैर्ग्रहैस्ततोर्थोतुंगस्थेबलिनिचभास्करेस्ववीर्यात् आयस्थैरुदय
धनाश्रितैश्चसौम्यैःसंचित्यबलसहितैरनेकधास्वम् ४ इतिकर्माजीवाध्यायः॥

द्यवनानांमतभेदः यस्यजन्मसमयेक्रूरैःपापग्रहैःस्वतुंगगैःस्वोच्चस्थैर्जातोमहीपतीराजांभवति किंतुक्रूरमतिः पापबुद्धिरिति प्राहुःकथयंति
अर्थादेवसौम्यैरुच्चगतैः महीपतिर्धर्मात्माचभवति मिश्रैरुच्चगतैर्मिश्रस्वभावोराजाइति एषएवार्थोमणित्थेनाभिहितः तथाचतद्वाक्यं पापैः
पापमतिः स्वोच्चगतैर्धर्मवांस्तथासौम्यैः व्यामिश्रैर्मिश्रमतिःपृथ्वीशोजायतेमनुजः क्रूरैस्त्विति जीवशर्मणःपक्षःजन्मनिक्रूरैस्तूच्चगतैः क्षित्य
धिपोनराजाप्रजायते किंतुराज्ञातुल्योधनवान्भवति तथाचतद्वाक्यं पापैरुच्चगतैर्जातानभवंति नृपानराः किंतुवित्तान्वितास्तेस्युः क्रोधिनः
कलहप्रियाइति वराहमिहिरस्ययवनेश्वरमतमभिप्रेतं यतस्तेनसामान्येनैवस्वल्पजातकेभिहितं त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवाभवंति

राजानः पंचादिभिरन्यकुलोद्भवास्वतदूत्रिकोणगतैरिति १ अथद्वात्रिंशद्राजयोगान्वसंततिलकेनाह वक्रार्कजाइति वक्रोंगारकः अर्कजःसौरः
अर्कःसूर्यः गुरुर्जीवः एतैः वक्रार्कजार्कगुरुभिः भौमशनिसूर्यजीवैः सकलैःसर्वैश्चतुर्भिरपिस्वोच्चेषुस्थितैः कथितेकलग्नेएषांकथितग्रहाणां
चतुर्णामध्यादेकैकस्मिल्लग्नगतेचत्वारोराजयोगाभवंति तथात्रिभिश्च एषामेवमध्यात्रिभिः स्वोच्चगतैः कथितेकलग्नेद्वादशराजयोगाभवंति ए
वंषोडशद्व्येकाश्रितेर्षिति एतेषांमध्याद्द्वाभ्यामुच्चगताभ्यामनयोर्मध्यादेकस्मिन्लग्नगतेशशिनिचंद्रेस्वक्षेत्रगेकर्कटस्थेतेषामेव वक्रार्कजार्कगुरू
णांमध्या द्ग्रहद्वयेस्वोच्चाश्रितेनदेकतमेविलग्नगेद्वादशराजयोगाभवंति एकाश्रितेषुच तेषामेवमध्यादेकस्मिन्नुच्चाश्रितेतस्मिन्नेवविलग्नगेचत्वा

अथराजयोगाध्यायमा॰ प्राहुर्यवनाःस्वतुंगगैःक्रूरैःक्रूरमतिर्म
हीपतिःक्रूरैस्तुनजीवशर्मणःपक्षोक्षित्यधिपःप्रजायते ॥१॥

रोराजयोगाभवंति एवंषोडशस्त्रोकैः पूर्वोक्तैःसहद्वात्रिंशत् तद्यथा मेषेर्कः कर्कटेजीवः तुलेसौरः मकरेकुजः शेषायथेष्टं ईदृश्यांग्रहसंस्थायां
मेषलग्नगतेएकोयोगः १ कर्कटेद्वितीयः२ तुलेतृतीयः ३ मकरेचतुर्थः ४ एवंवक्रार्कजार्कगुरुभिःसकलैः स्वोच्चेषुतदेकतमेलग्नेचत्वारोराजयो
गाः अथत्रिभिः तद्यथा मेषेर्कः कर्कटेजीवः तुलेसौरः शेषायथेष्टं ईदृश्यामपिग्रहसंस्थायांमेषलग्नेएकोयोगः कर्कटेद्वितीयः तुलेतृती
यः पूर्वैःसहसप्त ७ अथमेषेर्कः कर्कटेजीवः मकरेभौमः शेषायथेष्टम् ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकोयोगः कर्कटेद्वितीयः मकरेतृतीयः पू
र्वैःसहदश १० अथमेषेर्कः तुलेसौरः मकरेभौमः शेषायथेष्टम् ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकः तुलेद्वितीयः मकरेतृतीयः ३ एवंत्रयोदश१३

अथकर्कटेजीवः तुलेसौरः मकरेभौमः शेषायथेष्टम् ईदृश्यांचग्रहसंस्थायांकर्कटेएकः तुलेद्वितीयः मकरेतृतीयः ३ एवंषोडशराजयोगाः १६ चतुर्भिः त्रिभिःस्वोच्चगतैः तदेकतमेविलग्नेइतिगतम् द्व्येकाश्रितेष्वित्यादियोगेषुयावत्कर्कटेचंद्रमानभवति तावद्योगाएवनभवंति तद्यथा द्व्याश्रितेषुग्रहेषु स्वक्षेत्रगतेच्चचंद्रेद्वादशराजयोगाव्याख्यायंते तद्यथा मेषेर्कःकर्कटेचंद्रजीवौशेषायथेष्टं ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकोयोगः कर्कटेद्वि-तीयः २ अथमेषेर्कः कर्कटेचंद्रः तुलेसौरः शेषायथेष्टम् तदामेषेतृतीयः ३ तुलेचतुर्थः ४ अथमेषेर्कः कर्कटेचंद्रः मकरेभौमः शेषायथे ष्टं तथामेषेपंचमः ५ मकरेषष्ठः ६ अथकर्कटेचंद्रजीवौ तुलेसौरः शेषायथेष्टम् तथाकर्कटेसप्तमः ७ तुलेऽष्टमः ८ अथकर्कटस्थौचंद्रजी

वक्रार्कजार्कगुरुभिःसकलैस्त्रिभिश्चस्वोच्चेषुषोडशनृपाःकथितैकलग्ने
द्व्येकाश्रितेषुचतथैकतमेविलग्नेस्वक्षेत्रगेशशिनिषोडशभूमिपाःस्युः२

वौ मकरेभौमः शेषायथेष्टम् तदाकर्कटेनवमः ९ मकरेदशमः १० अथतुलेसौरः मकरेभौमः कर्कटेचंद्रः शेषायथेष्टं तदातुलेएकादश ११ मकरे-द्वादश १२ द्व्याश्रितेष्विति गतं अथैकाश्रितेषुकर्कटस्थेचंद्रेमेषस्थेर्केमेषलग्नेएकः १ कर्कलग्नेतत्रतयोश्चंद्रजीवयोः द्वितीयः २ कर्कटस्थेचंद्रे तुलास्थेसौरेतस्मिन्नेवलग्नेतृतीयः ३ कर्कटस्थेचंद्रेमकरस्थेभौमेतस्मिन्नेवलग्नेचतुर्थः ४ एवंपूर्वैर्द्वादशभिःसहषोडशश्लोकपूर्वोक्तैःषोडश-भिः सहद्वात्रिंशद्राजयोगाव्याख्याताः ३२।२ अथचतुश्चत्वारिंशद्राजयोगानत्रुष्टुभाह वर्गोत्तमगतेलग्नइति लग्नेजन्मकालिकेलग्नेवर्गोत्तमगते-स्वनवांशकस्थइत्यर्थः तस्मिंश्चंद्रवर्जितैरन्यग्रहैश्चतुराद्यैः दृष्टेचतुर्भिःपंचभिः षड्भिर्वावलोकितेद्वाविंशतिराजयोगाः स्मृताःउक्ताः अत्रलग्नेचं

दृष्टेनयोगभंगः किंतुपश्यतांमध्येनगण्यते सतुपश्यतुमावापश्यतु अन्यैश्चतुरादिभिः ग्रहैर्दृष्टैराजयोगोभवति एवंवर्गोत्तमगतेलग्नेद्वाविंशतियोगाः २२ एवंचंद्रेवर्गोत्तमांशस्थेचतुराद्यैर्ग्रहैः दृष्टेद्वाविंशतियोगाभवंति एवंचतुश्चत्वारिंशत् ४४ अत्रलग्नेचंद्रेवाचतुर्भिर्दृश्यमानेपंचदश १५ विकल्पाभवंति पंचभिःदृश्यमाने ६ षड्विकल्पाभवंति षड्भिरेकः १ एवंद्वाविंशतिः २२ तद्यथा लग्नेचंद्रेवारविभौमबुधगुरुभिः दृश्यमानेएकोयोगः रविभौमबुधसितैःद्वितीयः २ रविभौमबुधसौरैः तृतीयः ३ रविभौमजीवसितैश्चतुर्थः ४ रविभौमजीवसौरैःपंचमः ५ रविभौमशुक्रसौरैः षष्ठः ६ रविबुधजीवशुक्रैःसप्तमः ७ रविबुधजीवसौरैरष्टमः ८ रविबुधशुक्रसौरैर्नवमः ९ रविजीवशुक्रसौरैर्दशमः १० भौमबुधजीवशुक्रैरेकादशः ११ भौ

वर्गोत्तमगतेलग्नेचंद्रेवाचंद्रवर्जितैः चतु
राद्यैर्ग्रहैर्दृष्टैर्नृपाद्वाविंशतिःस्मृताः ॥३॥

मबुधजीवसौरैर्द्वादशः १२ भौमबुधशुक्रसौरैस्त्रयोदशः १३ भौमजीवशुक्रसौरैश्चतुर्दशः १४ बुधजीवशुक्रसौरैःपंचदशः १५ एवंचतुर्भिरपिविकल्पैःपंचदश अथपंचविकल्पाः रविभौमबुधजीवशुक्रैरेकः १ रविभौमबुधजीवसौरैर्द्वितीयः २ रविभौमबुधशुक्रसौरैस्तृतीयः ३ रविभौमजीवशुक्रसौरैश्चतुर्थः ४ रविबुधजीवशुक्रसौरैःपंचमः ५ भौमबुधजीवशुक्रसौरैःषष्ठः ६ एवंपंचविकल्पैः षट् पूर्वोक्तैःपंचदशभिःसहैकविंशतिः २१ रविभौमबुधजीवशुक्रसौरैःषड्भिरेकः १ एवंद्वाविंशतिः २२ लग्नाच्चंद्राच्चैवंभवंचतुश्चत्वारिंशत् ४४ परमार्थेनैतद्योगद्वयंभवतद्यथा वर्गोत्तमगतेचंद्रेचतुराद्यैर्दृष्टेएकः लग्नेद्वितीयः संख्याप्रदर्शनंगणितप्रदर्शनार्थं अत्रेवचंद्रमसोयदिराशौवर्गोत्तमावस्थितिंनिरू

प्यगणितंक्रियेततदेंतेषामेवयोगानांचतुःषष्ठ्यधिकंशतद्वयंसंभवति एवंप्रत्येकस्मिन्वर्गेवर्गोत्तमस्थेचतुःषष्ठ्यधिकमेवयोगशतद्वयं एवंचंद्रलग्नयोर्योगा
नामेकीकृतानांपंचशतान्यष्टाविंशत्यधिकानिभवंति तथाचमांडव्यः विलग्नभवनंगतेबलयुतेचवर्गोत्तमेचतुःप्रभृतिभिर्ग्रहैः शशिनिवासमालोकि
तेससंभवति पार्थिवः खलुकृपाणपाणीरणेकदाचिदपिवीक्ष्यतेरिपुजनोनयस्याननम् १।२ अथशिखरिण्यापंचयोगानाह यमेइति यमे-
सौरेकुंभस्थेअर्केसूर्येऽजेमेषस्थेसति शशिनिचंद्रेगविवृषस्थितेतैरेवतनुगैः तेषांग्रहाणामेकतमेतनुगेलग्नस्थेनकेवलंयावच्छशिजगुरुवक्रैः बु
धजीवभौमैः नृयुक्सिंहालिस्थैः मिथुनहारिवृश्चिकस्थैः जातानृपतयोराजानोभवंति चकारोत्रलुप्तोद्रष्टव्यः तत्रैतज्जातं सौरः कुंभे रविर्मेषे

यमेकुंभेर्केजेगविशशिनितैरेवतनुगैर्नृयुक्सिंहालिस्थैःशशिजगुरुवक्रैर्नृपतयः य
मेंदूतुंगेगेसवितृशशिजोषष्ठभवनेतुलाजेंदुक्षेत्रैःससितकुजजीवैश्चनरपो ॥ ४ ॥

चंद्रोवृषे बुधोमिथुने जीवःसिंहे भौमोवृश्चिके ईदृश्यांग्रहसंस्थायांकुंभलग्नेएकोयोगः १ मेषेद्वितीयः २ वृषेतृतीयः यमेंदूइति सौरचंद्रौतुं
गेउच्चेनकेवलंयावदंगेतनौलग्नेइत्यर्थः सवितृशशिजोसूर्यबुधौषष्ठभवने कन्यायां तुलाजेंदुक्षेत्रैः तुलाप्रसिद्धः अजोमेषः इंदुक्षेत्रंकर्कटः ए
तैःयथासंख्यंससितकुजजीवैः शुक्रभौमगुरुयुक्तैः नरपोद्वौराजयोगाविति तत्रैतज्जातं तुलेसौरः वृषेचंद्रः कन्यायामर्कबुधौतुलेशुक्रः मे
षेभौमः कर्कटेजीवः ईदृश्यांग्रहसंस्थायांतुलालग्नेएकोयोगः १ वृषेद्वितीयः २ पूर्वैस्त्रिभिःसहपंच ५ अत्रषष्ठभवनेषष्ठराशौलग्नात्केचिदि
च्छंति एतदुक्तं यस्मात्तुलस्थेशुक्रेमीनस्थस्यार्कस्यासंभवः तथाचबादरायणः तुलालग्नेसितसौरौमेषेभौमोगुरुः कुलीरगतः कन्यायांरविश

शिजोजातोनृपतिर्वृषेसचंद्रेवा ४ अथान्यद्राजयोगत्रयंशिखरिण्याह कुजेतुंगेऽर्केंद्वोरिति कुजेभौमेतुंगस्थेउच्चस्थेमकरगतेइत्यर्थः अर्केंद्वोःसूर्यशशिनोः धनुषिचापेस्थितयोः यमलग्नेयत्रतत्रराशौलग्नेशनैश्चरेलग्नगतेमकरस्थइत्यर्थः एवंविधेयोगेजातः कुपतिः भूमीशः नृपतीराजाभवति यमलग्नेइति मकरकुंभयोः अन्यतमेलग्नेइतिव्याख्यातं यमस्यलग्नेयम लग्नइति केचित् यत्रतत्रराशाववस्थितेसौरेलग्नगेइतिव्याख्यानम् तच्चायुक्तं यस्माद्बादरायणः लग्नेसौरस्तुंगेभौमश्चंद्रादित्यौचापमामार्वित अस्माकंप्रथमाव्याख्यासाध्वीप्रतिभाति यस्मान्मांडव्यः आदित्यश्चनिशाकरश्चभवतोवागीशराशौयदासार्द्धंभास्करिणास्वराशिसहितः प्राप्तोमृगेमंगलः प्राप्नोतिप्रभवंतदा ससकृत्क्ष्मापालचूडामणि

**कुजेतुंगेर्केंद्वोर्धनुषियमलग्नेचकुपतिः पतिर्भूमेश्चान्यःक्षितिसुतविलग्नेशशशिनि सचंद्रेसौरेस्तेसुरपतिगुरौचापधरगे स्वतुंगस्थेभानावुदयमुपयातेक्षितिपतिः ५**

स्वस्यंतिप्रतिपंथिनोरणभुवेयस्मात्कृतांतादिवपतिर्भूमेश्चान्यइति अस्मिन्नेवयोगेक्षितिसुतविलग्नेभौमेशशशिनिचंद्रयुक्तेलग्नगेक्षितिसुतोंगारकः तस्मिन्स्वोच्चस्थेशशिनिचंद्रमसायुक्तेर्केधनुर्धरस्थेराजयोगः तत्रैतज्जातंमकरलग्नेचंद्रांगारकयुतेधनुर्धरगतेऽर्केऽन्योद्वितीयोभूमेःपतिर्भवतिराजाइत्यर्थः अत्रचबादरायणः भानुश्चापेसेंदुर्भौमस्तुंगप्राप्तोलग्नेवास्यात् सचंद्रेसौरेस्तइति सौरेशनैश्चरेसचंद्रेशशिनियुक्तेतथाभूतेस्तेसप्तमस्थानगते तथासुरपतिगुरौजीवेचापधरगेधनुर्धरस्थेभानौआदित्येस्वतुंगस्थेस्वोच्चेमेषप्राप्तेउदयलग्नमुपयातेप्राप्तेजातःक्षितिपतीराजाभवति तत्रैतज्जातं मेषेलग्नेस्तत्रैवार्कः धन्विनीजीवः तुलागतौशशिसौरौएवंविधेयोगेजातोराजाभवत्येवंराजयोगास्त्रयः ५ अथशिखरिण्याराजयोगद्वयमाह वृषेसेंदौलग्नइति वृषेगविसेंदौचंद्रयुक्तेलग्नेस्थितेसवितृगुरुतीक्ष्णां

शुक्रतनये: सूर्यजीवसौरे: यथासंख्यंसुहृज्जायाखस्थैः चतुर्थसप्तमदशमस्थिते: नियमान्निश्चयात्मानवपतिःराजाभवति तत्रैतज्जातं वृषेलग्नस्त त्रैवचंद्रः सिंहेऽर्कोवृश्चिकेजीवः कुंभेसौरः एवंविधेयोगेजातोऽवश्यंराजाभवति मृगेमंदइति मृगेमकरेलग्नेतत्रस्थेमंदेसौरे सहजारिपुधर्मव्यय गते: तृतीयषष्ठनवमद्वादशस्थैः शशांकाद्यैः चंद्रांगारकबुधजीवैः एवंविधेयोगेजातःख्यातःसर्वत्रविदितः पृथुगुणयशाः गुणाः शौर्यादयः विस्तीर्णगुणकीर्तिः पुंगलपतिः मनुष्यनाथोभवति ननुशशांकाद्यैरित्युक्ते शुक्रः क्वगच्छतु उच्यते यथासंख्यात्पंचमस्थानस्याविद्यमानत्वात् शुक्रस्यादित्यपंचमत्वादनवकाशः तत्रैतज्जातम् मकरेलग्नस्तत्रैवसौरः मीनेचंद्रः मिथुनेभौमः कन्यायांबुधः धन्विनिजीवः शुक्रोर्कोयत्रत

वृषेसेंदौलग्नेसवितृगुरुतीक्ष्णांशुतनयैः सुहृज्जायाखस्थैर्भवतिनियमान्मानवपतिः
मृगेमंदेलग्नेसहजरिपुधर्मव्ययगतैःशशांकाद्यैःख्यातःपृथुगुणयशाःपुंगलपतिः ६
हयेसेंदौजीवेमृगमुखगतेभूमितनयेस्वतुंगस्थौलग्नेभृगुजशशिजावत्रनृपती ॥

त्रस्थौएवंविधेयोगेजातोराजाभवति पृथुगुणयशाः एवमत्रराजयोगौद्वौ तथाचमांडव्यः मृगेलग्नेसौरस्तिमिथुनगतः शीतकिरणः कुजोयुग्मेनार्या शशांकतसुतश्चापधरगः गुरुर्दैत्येज्याकावभिमतगतौचारवशतः प्रसूतौयस्यासौभवतिनरपः शक्रसदृशः १। ६ अथशिखरिण्याराजयो-गत्रयमाह हयेसेंदावित हयेधनुषिजीवेगुरौसेंदौसचंद्रेस्थिते भूमितनयेंगारकेमृगमुखगतेमकरस्थे मृगार्द्धपूर्वीमकरोमृगार्द्ध इतिवच नात् भृगुजशशिजौशुक्रबुधौस्वतुंगस्थौस्वोच्चप्राप्तौयदिलग्नेभवतस्तदात्रास्मिन्योगद्वयेएतत् तत्रैतज्जातं बृहस्पतौसचंद्रेधन्विगतेमकर

गतेभौमे एवंविधायांग्रहसंस्थायांमीनलग्नेसशशांके एकोयोगः कन्यालग्नेद्वितीयोयोगः स्वतस्थाविति वक्रार्कीभौमसौरौस्वतस्थौपंचमस्थानगतौ त थागुरुशशिसिता जीवचंद्रशुक्राहिबुकेचतुर्थस्थानेबुधेकन्यागतेलग्नेजातोऽन्योपरोपिनृपोराजागुणवान्भवति तत्रैतज्ज्ञानं कन्यालग्नंतत्रैवबु धः मकरस्थौशनिभौमौधनुर्धरस्थाजीवचंद्रशुक्राः यदाभवंतितदाजातोराजागुणवांश्चभवति एवंराजयोगास्त्रयः ७ अथशिखरिण्याराजयोगत्रयमाह झषेसंदाविति झषेमीनेसेंदौसचंद्रेलग्नेमीनलग्नेसचंद्रे घटमृगमृगेंद्रेषुसहितैर्यमारार्कैः घटः कुंभः मृगोमकरः

स्वतस्थौवक्रार्कीगुरुशशिसिताश्चापिहिबुके बुधेकन्यालग्नेभवतिहिनृपोन्योपिगुणवान् ७
झषेसेंदौलग्नेघटमृगमृगेंद्रेषुसहितैर्यमारार्कैर्यातःसखलुमनुजःशास्तिवसुधाम् अजे
सारेमूर्तौशशिगृहगतेचामरगुरौसुरेज्येवालग्नेधरणिपतिरन्योपिगुणवान् ॥ ८ ॥ ९॥

मृगेंद्रःसिंहः तेषुयथासंख्यंयमारार्कैः स्थितैः तत्रैतज्ज्ञानं मीनोलग्नस्तत्रैवचंद्रः स्थितः कुंभेसौरः मकरेभौमः सिंहेऽर्कः एवंविधेयोगेजातः यः उत्पन्नः समनुजोमनुष्योशास्तिवसुधां भूमिंपरिपालयति राजाभवतीत्यर्थः खलुशब्दोवाक्यालंकारः अजेसारइति अजेमेषेसारेसभौमे मूर्तौलग्नस्थितेतथाचामरगुरौ जीवेशशिगृहगतेकर्कटस्थे जातोनृपोराजागुणवान्भवति अथवासुरेज्येबृहस्पतौकर्कटस्थेलग्नगतेभौमेमेषस्थेजातोन्योपरोराजागुणवांश्चभवति एवमत्रराजयोगास्त्रयः ८ ९ ९ ९ ९ ९ ९ ९ ९

अथराजयोगंविद्युन्मालयाह कर्किणीति कर्किणिलग्नेकर्कटकेलग्नेतत्स्थेतत्रैवव्यवस्थितेजीवेगुरौ चंद्रसितज्ञैः शशिशुक्रबुधैः आयप्राप्तैरेकादश
स्थानस्थैः मेषगतेर्के आदित्येमेषस्थेजातंसंभूतंपृथ्वीनाथं भूमिपतिं विक्रमयुक्तं प्रतापसहितंविंद्याज्जानीयात् ९ अथद्रुतविलंबितेनरा
जयोगमाह मृगमुखेति अर्कतनयःसौरः मृगमुखेमकरगतः सचतनुसंस्थोलग्नप्राप्तः तथाक्रियकुलीरहरयः मेषकर्किसिंहाः अधिपैःस्व
नाथैः युक्ताःसहिताः तथामेषेभौमः कर्कटेचंद्रः सिंहेसूर्यइत्यर्थः तथाबुधशुक्रौज्ञसितौयथासंख्यंमिथुनतौलिसहितौ तथामिथुनेबुधः तु
लेशुक्रः एवंविधोयदियोगोभवति तदाजातः पृथुयशाः विस्तीर्णकीर्तिः।पृथिवीशोराजाभवति तत्रैतज्जातं मकरोलग्नस्तत्रैवसौरःमेषेभौमः

कर्किणिलग्नेतत्स्थेजीवेचंद्रसितज्ञैरायप्राप्तैः मेषगतेर्केजातंविंद्याद्विक्रमयुक्तंपृथ्वीनाथं ९
मृगमुखेर्कतनयस्तनुसंस्थःक्रियकुलीरहयोऽधिपयुक्ताः मिथुनतौलिसहितौबुधशुक्रौय
दितदापृथुयशाःपृथिवीशः १० स्वोच्चसंस्थेबुधेलग्नेभृगौमेषूरणाश्रिते सजीवेस्तेनिशानाथे
राजामंदारयोःसुते ११

कर्कटेचंद्रः सिंहेऽर्कः मिथुनेबुधः तुलेशुक्रः एवंविधायांग्रहसंस्थायांयत्रतत्रस्थेजीवेयदिजातो
भवति तदापृथिवीशःपृथुयशाभवति १० अथराजयोगमनुष्टुभाह स्वोच्चेति बुधेस्वोच्चसंस्थेकन्यागतेलग्नेगेभृगौशुक्रेमेषूरणाश्रितेदशम
स्थानस्थिते निशानाथेचंद्रेसजीवेबृहस्पतिसंयुक्तेऽस्तेसप्तमस्थानगतेमंदारयोः शनिभौमयोःसुतेपंचमेस्थितयोः जातोराजाभवति तत्रैतज्जा
तं कन्यालग्नेसबुधेमिथुनगतेशुक्रेगुरौसचंद्रेमीनस्थेमकरस्थयोः शनिभौमयोःजातोराजाभवति एतेराजयोगाः प्रोक्ताः ११ ७ ७

एतेषवराजवंशतोपिजातोराजाभवति वक्ष्यमाणेषुतुराजवंशजएवराजाभवति तच्चश्रालिन्याह अपीति अपिशब्दःसंभावनायांप्रोक्तभूपालयोगैः कथितराजयोगैः खलकुलजातानीचवंशोद्भवाअपिमानवाःपुरुषाः राज्यभाजः नृपाःभवंति किमुतकिंपुनः नृपकुलोत्थाः राजवंशसंभूताः तेऽवश्यंराजानोभवंति वक्ष्यमाणैःपुनः योगैःनृपतिकुलसमुत्थाः राजवंशजाः पार्थिवाःराजानोभवंति तेषुवक्ष्यमाणेषु अभूपालवंशजःअराजपुत्रः नृपतितुल्योभवति राजसमइत्यर्थः नराजाकिमुतसंभावनायाम् १२ अथराजयोगमोपछंदसिकेनाह उच्चस्वत्रिकोणगैरिति त्र्याद्यैः त्र्यादिभिर्ग्रहैः स्वोच्चगतैः स्वत्रिकोणगतैः बलस्थैः कालादिबलोपेतैः जाताभूपतिवंशजाः नृपकुलजातानरेंद्राराजानोभवंति आ

अपिखलकुजजातामानवाराज्यभाजःकिमुतनृपकुलोत्थाःप्रोक्तभूपालयोगैः नृपतिकुलसमुत्थाःपार्थिवावक्ष्यमाणैर्भवतिनृपतितुल्यस्तेष्वभूपालपुत्रः १२ उच्चस्वत्रिकोणगैबलस्थैस्त्र्याद्यैर्भूपतिवंशजानरेंद्राः पंचादिभिरन्यवंशजाताहीनैर्वित्तयुतानभूमिपालाः १३

दिग्रहणाच्चतुर्भिरपिपंचादिभिरन्यवंशजाताइति पंचादिभिःग्रहैः स्वोच्चस्थैः मूलत्रिकोणगैर्वा अन्यवंशजाता हीनकुलजाअपिराजानोभवंति आदिग्रहणात्षड्भिःसप्तभिरपिहीनैर्वित्तयुताइति त्रिभिरुच्चस्थैः मूलत्रिकोणस्थैर्वाहीनबलैः कालादिबलरहितैःराजकुलजाअपिराजानोनभवंति किंतुराजतुल्याभवंति एतैरत्रयोक्तैः हीनैःवित्तयुताःसधनाभवंति नभूमिपालाः राजानः एतदुक्तंभवति एकेनग्रहेणद्वाभ्यांवास्वोच्चगाभ्यांमूलत्रिकोणस्थाभ्यांवाराजकुलजोपिराजानभवति किंतुधनवान् एवंत्रिभिश्चतुर्भिर्वाऽन्यवंशजाताश्चित्तयुताभवंति नराजानःअत्रयदिग्रहाः यथाभिहितसंख्याउच्चस्थाःनभवंति स्वोच्चगामूलत्रिकोणस्थैःसहसंख्यांसंपादयंति तथाप्ययथोक्तफलदाभवंति अथोच्चगताः केंद्रबलाःस्वत्रिकोणगतावा तथापि १३

कर्मारभत्यफलं नीचांवापिशत्रूनांवा विकलांलभतेन्यपूर्विकांभार्यां सहजसमान्यपिमित्राणिचास्यबंधुत्वमुपयांति शस्त्रेणवाविषेर्वामरणंपित्तोद्भवैर्विकारैर्वा स्वात्प
क्षाज्ज्वलनाद्वा वर्षाद्दुर्गात्प्रपतनाद्वा वृषभाविलग्नेस्थूलोष्ठगंडनासोमहाललाटश्च श्लेष्मानिलभूयिष्ठस्त्यागीबहुशोव्ययरतश्च कन्याप्रजोल्पपुत्रः पितुर्जन
न्याश्चदोषहृद्बहुशः कर्मणिसततंसक्तोविधर्मयुक्तोर्थभाक्चैव नित्यंकलत्रकांक्षीशस्त्रविघातीसदा स्वजनहर्ता मृत्युः शस्त्रैः पाशैर्मृगैश्चलभतेन्यदेशेषुदेहः
श्रमैर्जलैर्वाशूलैर्वाप्यटनानिरसनैश्चैव पुरुषश्चतुष्पदैर्वाबलान्वितान्मृत्युमुपयाति पूर्वविलग्नेमिथुनेहीनांगः सूयतेधिकांगोवा प्रियवाग्विशिष्टकर्माभि-
श्वप्रकृतिर्हिजननीकः अल्पमतिरल्पकायः सतांचमहितोगुरूणांच अल्पसहजोल्पचेष्टः परावमर्दीगुणयुतश्च कर्मसुबहुषभिरतोधर्मंसाधयति नचार्थ
धर्मेण प्रासान्लाभान्विविधान्दोषैस्तैस्तैश्चनाशयति बह्वीः पत्नीर्लभतेरोगांश्चदारुणान्जयति व्यालाद्विषान्मृगाद्वाप्युदकाद्वामृत्युमुपयाति कर्किणिपू
र्वविलग्नेनैकाग्रोगुल्मरोगवान्भीरुः उरसिकृताभिज्ञानः कफानिलात्मादृढग्राही पापानहितान्भजतेपरस्वमपिनिक्षिपद्व्ययेनसकृत् स्वजनादृषः
स्वजनैर्विभर्त्सितोन्यस्थिरप्रसवः तीक्ष्णंकर्मविदेशेनित्यंत्यक्तोदितः परस्वामी असदृशदारोरिपुनिर्जितश्चपूज्यः समूहानांकंठापीडाइज्वाकफोद्
याद्स्थिभंजनाद्दात् देहच्छेदादथवाजलोदरान्मृत्युमाप्नोति सिंहविलग्नेकठिनः प्रियामिषः पैत्तिकोविततनाशः बह्वारंभकुटुंबः कृपणस्तथसं
मतः ख्यातः सहजविषादीस्वजनस्यघातकोविक्रमैः स्वकैर्युक्तः अविषादीकर्मकरोविविधोपायैस्तथाभिष्टः भार्याबह्वीर्लभतेविंद्याद्विविधाः कुले
रूपेताश्च कट्यांरुजश्चबहुशोजान्वोर्दशनेषुचाप्नोति मृत्युः शस्त्रैः पापैर्विषैश्चकाष्ठैरथामयैश्चापि अंबुचरैर्वासत्वैर्बुभुक्षयाक्रमसमुपयाति षष्ठ
विलग्नेप्रियवाक्नतुच्छविर्दीर्घकरचरणः मिश्रप्रकृतिश्चार्याकृतिर्व्रणीचार्थवान्कृपणः स्वजनस्येष्टः कन्याबहुप्रजोभ्रातृभिर्विरुद्धश्च धर्मप्रियोल्प
लाभः कर्मणिनिपुणः समाचरति विविधाश्चतुष्पदगणाच्छस्त्रात् पित्तोद्भवाद्रोगात् शोकात्संपाताद्वामृत्युंचाप्नोति पाशाद्वासप्तमराशौलग्नेवि

षमांगः सूर्यैर्विषमशीलः कफवातिकः स्वचपलोक्षस्वग्रीवः कृतज्ञश्च अर्थान्विपुलान्लभतेव्ययेनसंपूज्यतेयशः प्रायः गुरुसेवायांनिरतः पितान्यजन
सहजपूज्यः अध्वरुचिर्धर्मिष्ठोविनाशमायातिपीडनैः स्वैःस्वैः मृतभार्यः कलहरुचिर्बहुशः शोकादिभिः क्लिष्टः मृत्युः ख्यातात्पुरुषात्स्वजनात्सौ
म्याच्चतुष्पदाद्वापि खेदाच्चविप्रयोगादुपवासान्मार्गयोगाद्वा अष्टमराशौलग्नेविशालरुग्वाननोदरः क्रूरः पित्तप्रकृतिः पिंगेक्षणोमृदुद्रुतगतिः परस्वा
मी स्फीतकुटुंबस्वजनोंतकश्चबहुव्ययोबहुप्रसवः स्वरवर्जितोभ्रातृव्योवृषसेवीधर्महीनश्च भार्यानिमित्तविमुखीशत्रोरर्थान्नददातिबहुशश्च स्व
कुलोद्भूतांश्चतुर्नूलभतेरोगांश्चानेकविधान् गात्रछेदैः शत्रोर्वशंगतोबंधनैःमहारैश्च रोगैर्वापापकृतैर्ज्वलनाद्वामृत्युमुपयाति स्थूलोष्ठदशननासान

शिशिरकरसमागमेक्षणानांसदृशफलंप्रवदंतिलग्नजातम् फलमधिकमिदंयदत्रभावाद्भव
नभनाथगुणैर्विचिंतनीयाः २० इतिबृहज्जातके० राशिशीलाऽध्यायोऽष्टादशः समाप्तः

वमेलग्नेकफानिलप्रकृतिः मांसलगुल्फोरुभुजः कुनखीकर्मोद्यतः शूरः क्षुद्रान्नीचान्भजते चौर्यादनलान्नृपाच्चनष्टधनः विज्ञानानांप्रसवोबहुपूज्योभ्रा
तृघातरुचिः कर्मविदेशोद्विष्टः कुरुतेचित्तानिचार्हतिनृपेभ्यः धर्मेतुमध्यममतिर्दारैश्चविरोधमुपयाति रोगान्वदनेलभतेचतुष्पदाच्चात्मनःसमाप्नो
ति मृत्युंबिलेशयाद्वानृपाच्चबंधाज्जनाद्वापि दशमविलग्नेतनुनासिकापुटोदीर्घवक्रकरचरणः श्यश्चक्ष्मकोमृगास्योभीरुश्चपलोर्थबंधनभाक् क्ष
द्रकुटुंबोल्पधनः कृपणः कन्याप्रजोमृतस्वजनः सहजसमृद्धः शौर्यान्नृपादरण्याच्चलब्धधनः गवी शस्त्रोपजोनीचाभिष्टामवाप्नुयाद्भार्यां बहुविग्र

होल्पकेशोदुर्बलजानुश्चरोगार्तः बालादनिलाच्छस्त्रान्नृपाद्विषात्प्रपतनात्कजाद्वापि पित्तोदयादजीर्णात्प्रपयांति शस्त्रेणावष्टब्धः एकादशोविलग्नेस्तब्धः क्रूरः कुलाग्रजः पुरुषः पित्तानिलभूयिष्ठस्तिलपुष्पसमानमासस्थ मासान्नाशयतेर्थान्बहुभृत्यः साध्वसागीवक्ष्यापि क्षीणः स्वगोत्रगुरुजनपरपक्षस्कृत् स्वजनशत्रुः कर्मणिपापेसक्तः तनुश्चकांतानवाप्नुयाच्छुभान् धर्मध्वजमहत्तोदेवतपूजश्चकारयतिभार्याम् विग्रहशीलांलभतेविविधान्रोगान्कफोद्भवान्तुरसि म्रियतेचजठररोगाद्वमनात्स्त्रीणांप्रयोगाद्वा द्वादशगेप्राग्लग्नेस्थूलोष्ठोमीनदृड्महानासः कफवातिकोमहात्मात्वग्दोषीनैकमातचेष्टः शिष्टायव्ययभृत्यैः स्वजनस्त्रीपूजितः सहजनाथः कर्मणिधर्मेयुक्तः पित्रोपचयः स्वदारश्च नीचाचारांभार्यांलभतेचारिपून्स्वदारुणान्क्रूरान् रोगास्त्रशोणितोदाप्नुयाद्भयंव्यालसिंहेभ्यः मृत्युंपुरुषैर्गणवृंदपूजितैर्गुत्यजैर्विकारैर्वा विद्योषधप्रयोगादुपवासान्मार्गदोषाद्वा एवंशिशिरकरसमागमसदृशलग्नजातंफलं तथाचशिशिरकराश्रितराशेरीक्षणदृष्टिफलंवक्ष्यमाणंतथातदेवतल्लग्नजातस्यापिवक्तव्यं चंद्रेभूपबुधावित्यादि किंतुलग्नेफलमपिकिमिदं यदत्रभावद्वाश चंद्रराशितइदमत्रलग्नादिषुभावेष्वधिकंफलंयद्भावास्तन्वादयः भवनगुणैः राशिगुणैर्भवननाथगुणैस्तत्स्वामिगुणैर्विचिंतनीयाः विचार्याः भवनभनाथयोर्गुणःसबलत्वं एतदुक्तंभवति लग्नेबलवतिलग्नपतौचबलवतिजातस्यशरीरपुष्टिर्वक्तव्या लग्नाद्वितीयराशौबलवतितदधिपतौचबलवतिजातस्यधनसमृद्धिर्वक्तव्या एवंशेषराशिबलेतदधिपबलेचजातस्यभ्रात्रादीनांवृद्धिर्वक्तव्या तथापिकिंचिद्विशेषःकथयति

विपरीतंरिःफषष्ठाष्टमेषुइत्यादि एवंतन्वादिस्थेषुराशिषबलवत्सु तदधिपेषबलवत्सुचभावहानिर्वक्तव्या भवनभनाथयोः यद्येकोबलवान्भवतितदामध्यस्थाभाववृद्धिर्वाच्येति तथाचयवनेश्वरः भावेशभाववशिभस्वभावप्रधानमध्याधमदर्शनाद्यैः तद्भावसंपत्तिविपत्युपायैर्निर्याणिकंपाकमुपेतिपुंसाम् २० इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृत्तौराशिशीलाऽध्यायोऽष्टादशःसमासः १८

अथातोदृष्टिफलाध्यायोव्याख्यायते तत्रमेषवृषमिथुनकर्कटस्थेचंद्रेभौमाद्यैर्ग्रहैः दृश्यमानेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह चंद्रेभूपबुधाविति
कुजाद्याभौमादयः भौमबुधबृहस्पतिशुक्रशनैश्चरार्कीः तत्राजगेमेषस्थेचंद्रमसिभौमदृष्टेजातोभूपोराजाभवति बुधदृष्टेबुधः पंडितः जीवदृष्टे
नृपोपमः राजतुल्यः शुक्रदृष्टेगुणीगुणवान्भवति केचिद्गुणीगितिपठंति शनैश्चरदृष्टेस्तेनश्चोरः सूर्यदृष्टेऽधनः दरिद्रइति एवमपिमेषलग्नेभौ
मादिदृष्टफलंवाच्यं गविस्थेति गविवृषस्थेचंद्रमसिभौमदृष्टेजातोनिःस्वः दरिद्रः भवति बुधदृष्टेस्तेनश्चोरः जीवदृष्टेनृमान्यः नृणांमा

अथदृष्टिफलाध्यायः चंद्रेभूपबुधौनृपोपमगुणीस्तेनोधनश्चाजगेनिःस्वः
स्तेननृमान्यभूपधनिनःप्रेष्यःकुजाद्यैर्गवि नृस्थेयोव्यवहारिपार्थिवबुधा
भीस्तंतुवायोधनीस्वर्क्षेयोद्धृकविज्ञभूमिपतयोऽयोजीविदृग्रोगिणो ॥ १॥

न्यः पूज्यः केचिन्नृपाढ्यइतिपठंति नृपाढ्यः नृपोराजासचाढ्यः ईश्वरः शुक्रदृष्टेभूपः राजासौरदृष्टेधनी धनवान् सूर्यदृष्टेप्रेष्यः दासः एवं
वृषलग्नेपि नृस्थेमिथुनस्थेचंद्रमसिभौमदृष्टेऽयोव्यवहारी शस्त्रविक्रयकः बुधदृष्टेपार्थिवः राजा जीवदृष्टेबुधः पंडितः शुक्रदृष्टेभीः नि
र्भयः धीरः भयरहितः सौरदृष्टेतंतुवायः रविदृष्टेधनः दरिद्रः एवंमिथुनलग्नेपि स्वर्क्षेकर्कटस्थेचंद्रमसिभौमदृष्टेयोद्धाभवति युद्धकुशलः बुध
दृष्टेकविः काव्यकर्ता जीवदृष्टेज्ञः पंडितः शुक्रदृष्टेभूमिपतीराजा सौरदृष्टेयोजीवी आयुधजीवी शस्त्रोपजीवी सूर्यदृष्टेदृग्रोगीचक्षुर्व्याध्यर्दितः

एवंकर्कटलग्नेपि १ अथसिंहकन्यातुलावृश्चिकस्थेचंद्रेबुधादिदृष्टेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ज्योतिरिति बुधादयः बुधगुरुशुक्रशनि-
सूर्यभौमाः हरिः सिंहस्तस्मिन्हरौसिंहस्थेचंद्रेबुधदृष्टेज्योतिर्ज्ञः ज्योतिःशास्त्रार्थवेत्ता जीवदृष्टेआढ्यः ईश्वरः शुक्रदृष्टेनरेंद्रः राजा सौ
रदृष्टेनापितः रविदृष्टेनृपः राजा भौमदृष्टेक्ष्मेशः भूपतिः एवंसिंहलग्नेपि तद्वदित्यादि तद्वद्बुधादिभिर्दृष्टेइत्यनुवर्तते सर्वत्रषष्ठेकन्याग
तेचंद्रेबुधदृष्टेभूपः राजा जीवदृष्टेचमूपतिः सेनापतिः शुक्रदृष्टेनैपुणयुतः सर्वकार्येषुसूक्ष्मदृष्टिः अशुभैः सौररविभौमै दृष्टेस्त्र्याश्र
योभवति स्त्रियमाश्रित्यजीवतीत्यर्थः एवंकन्यालग्नेपि जूकेतुलास्थेचंद्रमसिबुधदृष्टेभूपोराजाभवति जीवदृष्टेस्वर्णकारः शुक्रदृष्टेव-

ज्योतिर्ज्ञाढ्यनरेंद्रनापितनृपक्ष्मेशाबुधाद्यैर्हरौतद्वद्भूपचमूपनैपुणयुताःषष्ठेशुभैःस्त्र्याश्रयः जूकेभू
पस्वर्णकारवणिजः शेषाक्षितेनैकृतीकीटेयुग्मपितानतश्चरजकोव्यंगोधनोभूपतिः ॥ २ ॥ ७ ॥

णिजः क्रयविक्रयज्ञः शेषाः सौरसूर्यभौमाः एतैःदृष्टेनैकृतीनिकृतः प्राणिघातकः एवंतुललग्नेपि कीटेवृश्चिकस्थेचंद्रमसिबुधदृष्टेयुग्मपिता
युग्मस्यजनकः द्वयोःपिताजातोभवति जातएवयुग्मपिता द्विपितृकइतिकेचिद्वदंति जीवदृष्टेनतः नम्रः शुक्रदृष्टेरजकः वस्त्ररागकृ
त् सौरदृष्टेव्यंगोंगहीनः सूर्यदृष्टेऽधनः दरिद्रः भौमदृष्टेभूपतिः राजा एवमेतेरेवदृष्टेवृश्चिकेपि २ अथधन्विमकरकुंभमीनस्थेचंद्रमसि
बुधादिदृष्टेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ज्ञात्युर्वीशेति तुरगोधन्वीतत्रस्थेचंद्रेबुधदृष्टेज्ञात्यीशः स्वजनभर्ता जीवदृष्टेउर्वीशोरा
जा शुक्रदृष्टेजनाश्रयः जनानामाश्रयस्थानं पापैःशनिरविभौमै दृष्टेसदंभः दांभिकः मिथ्याधर्मध्वजी शठः परकार्यविमुखश्चभवति

एवंधन्विलग्नेपि मृगोमकरस्तत्रस्थेचंद्रेबुधदृष्टेऽत्युर्वीशोराजाधिराजोभवति जीवदृष्टेनरेंद्रोराजा शुक्रदृष्टेपंडितः शनिदृष्टेधनीवित्तवान् सूर्यदृष्टेद्रव्योनः दरिद्रः भौमदृष्टेभूपोराजा एवंमकरलग्नेपि कुंभस्थेचंद्रमसि बुधदृष्टेभूपःराजाभवति जीवदृष्टेभूपसमः राजतुल्यः शुक्रदृष्टेन्यदारनिरतः परस्त्रीसक्तः चशब्दाच्छेषैः शनिसूर्यभौमैस्त्रिभिरप्यन्यदारनिरतएव एवंकुंभलग्नेपि झषगेमीनस्थेचंद्रमसिबुधदृष्टेहास्यज्ञः उपहासंकर्तुंजानाति जीवदृष्टेनृपतिःराजा शुक्रदृष्टेबुधः पंडितः पापाः शनिसूर्यभौमाः एतैर्दृष्टेचपापएवभवति एवंमीनलग्नेपि लग्नदृष्टिफलंचंद्रदृष्टिफलातिदेशेनोक्तं शिशिरकरसमागमेक्षणानांसदृशफलंप्रवदंतिलग्नजातमिति तत्रचंद्रमसादृष्टेलग्नेफ

ज्ञात्युर्वीशजनाश्रयश्चतुरगेपापैःसदंभःशतश्चात्युर्वीशनरेंद्रपंडितधनीद्रव्योनभूपो
मृगे भूपोभूपसमोन्यदारनिरतःशेषैश्चकुंभस्थिते हास्यज्ञोनृपतिर्बुधश्चझषगेपापश्चपा

पेक्षिते २ लंनोक्तं तस्मात्तत्रोच्यतेउक्तमेवयस्मादुक्तं होरास्वामिगुरुज्ञवीक्षितयुतानान्यैश्चवीर्योत्कटाः तत्रकर्कटवर्ज्यमन्योलग्नः चंद्रदृष्टोहीनबलोभवति हीनबलत्वादशोभनफलः उक्तंच मुक्त्वातुचंद्रभवनंलग्नगतंशिशिरकिरणसंदृष्टं अशुभफलंनिर्दिष्टंप्रश्नेजन्मसमयेवा ३ अथहोराद्रेष्काणव्यवस्थितस्यचंद्रस्यग्रहदृष्टिफलंशार्दूलविक्रीडितेनाह होरेशेति होराशब्देनराश्यर्द्धमुच्यते होरेतिलग्नंभवनस्यचार्द्धमितिवचनात् होरायाईशोहोरेशः तस्यर्क्षदलंहोरेशर्क्षदलं तत्राश्रिताहोरेशर्क्षदलाश्रिताः तैर्ग्रहैः होरेशर्क्षदलाश्रितैः शशीचंद्रः तद्गतस्तद्धोरास्थोदृष्टः शुभकरोभवति एतदुक्तंभवति यत्रतत्रराशौयस्यांहोरायांचंद्रमाःस्थितः तद्धोरास्थैः

सर्वग्रहैः यदि दृश्यतेतदाजन्मनिशुभकरोभवति तेनार्कहोरास्थश्चंद्रोयत्रतत्रराश्याश्रितैरर्कहोराश्रितैर्ग्रहैः दृष्टश्चशुभकरोभवति अर्थादेवचंद्रहोरास्थैर्दृष्टोशुभकरः एवंयत्रतत्रराशौस्वहोरास्थश्चंद्रहोरास्थैर्ग्रहैर्यत्रतत्रावस्थैर्दृष्टः शुभकरोभवति अर्थादेवार्कहोरास्थैर्दृष्टोशुभकरः एवंलग्नेपिहोरेशेनफलंयोज्यं त्र्यंशेतत्पतिभिरिति यत्रतत्रराशौयस्मिन्द्रेष्काणेस्थितश्चंद्रस्तस्ययः पतिस्तेनद्रेष्काणपतिना दृष्टश्चंद्रः शस्यते स्तूयते शुभकरइत्यर्थः पतिभिरिति बहुवचननिर्देशान्नवांशद्वादशांशत्रिंशांशकाधिपतयोगृह्यंते तैरपिदृष्टः चंद्रः शुभकरोभवति एवंलग्नेपि यद्यपिसामान्येनोक्तं तथापिशुभग्रहे द्रेष्काणपतिभिर्दृष्टः शस्यते पापग्रहेमध्यमः यस्मादनेनैवस्वल्प

> होरेशर्क्षदलाश्रितैःशुभकरोदृष्टःशशीतद्वतस्त्र्यंशेतत्पतिभिःसुहृद्भवनगैर्वावीक्षितःशस्यते यत्प्रोक्तं
> प्रतिराशिवीक्षणफलंतद्द्वादशांशेस्मृतं सूर्याद्यैरवलोकितेपिशशिनिज्ञेयंनवांशेष्वतः ॥ ४ ॥

जातकेउक्तं क्षेत्राधिपसंदृष्टेशशिनिनृपस्तत्सुहृद्भिरपिधनवान् द्रेष्काणांशकपैर्वाप्रायः सौम्यैः शुभंनान्यैरिति सुहृद्भवनगैरित्यादि सुहृद्भवनगैः मित्रक्षेत्रस्थैःग्रहैः वीक्षितः दृष्टःचंद्रः शस्यतेस्तूयतेशुभकरएव अर्थादेवस्वभवनगतैर्दृष्टः शस्यते अर्थादेवारिभवनगतैःदृष्टःनशस्यते अशुभफलोभवति एवंलग्नेपियोज्यं यत्प्रोक्तंप्रतिराशिवीक्षणफलंतद्द्वादशांशेस्मृतमिति प्रतिराशिंराशौराशौमेषादिस्थेचंद्रमसियद्वीक्षणफलंप्रोक्तं कथितंतदेवमेषादिद्वादशांशकस्थेचंद्रमसिस्मृतमुक्तं तदेववाच्यमिति चंद्रेभूपबुधावित्यादियदुक्तं एवंलग्नेपि तत्रापिकर्कटद्वादशांशं विनाचंद्रदृष्टिरशोभनासूर्याद्यैरित्यादि अतोऽस्मात्परंशशिनिचंद्रेसूर्याद्यैरर्कादिभिरवलोकितेदृष्टेनवांशेषुफलंज्ञेयंज्ञातव्यमिति ४

अथमेषवृश्चिकवृषतुलांशकस्थेचंद्रमसिसूर्यादिदृष्टेफलंवसंततिलकेनाह आरक्षिकइति क्षितिजोभौमः तन्नवांशकस्थे मेषनवांशकस्थे वृश्चि
कनवांशकस्थे चंद्रमसिसूर्यदृष्टे आरक्षिकोभवति आरक्षिकः नगररक्षाधिकृतः भौमदृष्टेवधरुचिः प्राणिघातकः बुधदृष्टेनियुद्धेकुशलः
नियुद्धेबाहुयुद्धेकुशलः शिक्षितः प्रवीणः जीवदृष्टेभूपःराजा शुक्रदृष्टेर्थवानीश्वरः सौरदृष्टेकलहकृदिति मूर्खइत्यादि सितांशेशुक्रनवां
शकेवृषनवांशकेतुलनवांशकेवास्थितेचंद्रमसिरविदृष्टेमूर्खोभवति भौमदृष्टेन्यदारनिरतः परदारसक्तः बुधदृष्टेकाव्यकृत् काव्यज्ञः के
चिदाद्यवदितिपठंति जीवदृष्टेसत्काव्यकृत्शोभनकाव्यकर्ता शुक्रदृष्टेसुखपरः सुखासक्तः सौरदृष्टेपरदारगः परकलत्राभिगामी ५

आरक्षिकोवधरुचिःकुशलोनियुद्धेभूपोर्थवान्कलहकृत्क्षितिजांशसंस्थे मूर्खोन्यदारनिरतः
सुकविःसितांशेसत्काव्यकृत्सुखपरोन्यकलत्रगश्च ५ बौधेहिरंगचरचोरकवींद्रमंत्रीगेयज्ञशि
ल्पनिपुणःशशिनिस्थितेंशे स्वांशेल्पगात्रधनलुब्धतपस्विमुख्यःस्त्रीपोष्यकृत्यनिरतश्चनिरीक्ष्यमाणे ६ अथमि
थुनकन्याकर्कटनवांशकस्थे चंद्रेर्कादिदृष्टेफलंवसंततिलकेनाह बौधेहीति शशिनिचंद्रेबौधेबुधनवांशकस्थे मिथुननवांशकस्थेकन्यानवांश
कस्थेवाकुणनिरीक्ष्यमाणेदृष्टेरंगचरःमल्लादिकोभवति भौमदृष्टेचौरः तस्करः बुधदृष्टेकवींद्रः कविराजःजीवदृष्टेमंत्रीसचिवः शुक्रदृष्टेगे
यज्ञः सौरदृष्टेशिल्पनिपुणः स्वांशेति स्वांशेआत्मीयनवांशकस्थेकर्कटनवांशस्थेशशिनिचंद्रेसूर्यदृष्टेऽल्पगात्रः कृशदेहोभवति भौमदृष्टे
धनलुब्धः कृपणः अल्पधनोवा बुधदृष्टेतपस्वी जीवदृष्टेमुख्यःप्रधानःसितदृष्टेस्त्रीपोष्यःस्त्रीभिरभिवर्धनीयः सौरदृष्टेकृत्यनिरतःकार्यासक्तः ६

अथसिंहधन्विमीननवांशस्थेचंद्रे सूर्यादिदृष्टेफलंमहर्षिण्याह सक्रोधइति सिंहांशकस्थेचंद्रमस्यर्कदृष्टेसक्रोधः क्रोधयुक्तोभवति भौमदृष्टेन रपतिसंमतः राजवल्लभः बुधदृष्टेनिधीशः निधिनाप्राप्तार्थः गुरुदृष्टेप्रभुरप्रतिहताज्ञः शुक्रदृष्टेऽसुतः पुत्ररहितः सौरदृष्टेतिहिंस्रकर्मा क्रूरकर्मणिरतः जीवांशइत्यादि जीवांशेबार्हस्पत्येनवांशकेधन्व्यंशकेमीनांशकगतेवास्थितेचंद्रमसिसूर्यदृष्टेप्रथितबलः प्रख्यातवीर्योभवति भौमदृष्टेरणोपदेष्टा संग्रामदेशकालव्यूहरचनाभिज्ञः बुधदृष्टेहास्यज्ञः उपहासवेत्ता जीवदृष्टेसचिवःमंत्री शुक्रदृष्टेविकामः कामहीनः पुंस्त्वहीनः सौरदृष्टेवृद्धशीलः धर्ममतिरिति ७ अथमकरनवांशकस्थेकुंभनवांशकस्थेवाचंद्रेसूर्यादिदृष्टेजातस्यफलंशा-

सक्रोधोनरपतिसंमतोनिधीशः सिंहांशेप्रभुरसुतोतिहिंस्रकर्मा जीवांशेप्रथितबलोरणोपदेष्टाहास्यज्ञः सचिवविकामवृद्धशीलः ॥ ७ ॥

र्दूलविक्रीडितेनाह अल्पापत्यइति आर्किः अर्कस्यापत्यमार्किः तस्य भागेशनैश्चरनवांशकेमकरनवांशकस्थेकुंभनवांशकस्थेवाचंद्रेसूर्यदृष्टेऽल्पापत्योऽल्पप्रसवोभवति भौमदृष्टेसत्यपिस्वेदुःखितः सत्यपिविद्यमानेपिस्वेधनेदुःखितोभवति बुधदृष्टेमानासक्तः गर्वितः जीवदृष्टेस्वेआत्मीयेकर्मण्यनुरक्तः कुलानुरूपकर्मकृत् शुक्रदृष्टेदुष्टस्त्रीद्विष्टः वल्लभः सौरदृष्टेकृपणः अदाता एवंतत्कालनवांशकवशात् ग्रहदृष्ट्यालग्नेपिवक्तव्यं किंतुतत्रापिकर्कटनवांशकंविनाचंद्रदृष्टिर्दृशुभेति भानोस्तद्वदिंद्वादिदृष्टे भानावादित्येंद्वादिदृष्टेचंद्राद्यैर्ग्रहैरवलोकितेतद्वत्तेनैवप्रकारेणदृष्टिफलंयत्रतत्रराशौ यत्रतत्रनवांशकस्थेचंद्रमस्यर्कादिदृष्टेयत्फलमुक्तंतद्वत् यत्रतत्रराशौ यत्रतत्रनवांशकेव्यवस्थितेऽर्केचंद्रदृष्टेतदेवफलंवाच्यं एतदुक्तंभवति नवांशकव्यव

स्थितस्यादित्यस्यचंद्रस्यचताराग्रहदृष्टिफलंतुल्यं किंतु यदादित्यदृष्ट्याचंद्रस्योक्तं तच्चंद्रदृष्ट्यासूर्यस्यवक्तव्यं तद्यथामेषवृश्चिकनवांशकस्थेर्केचंद्रदृष्टेआरक्षिकोभवति वृषतुलानवांशकस्थेमूर्खः मिथुनकन्यानवांशकस्थेरंगचरः सिंहनवांशकस्थेसक्रोधः धन्विमीननवांशकस्थेप्रथितबलः मकरकुंभनवांशकस्थेअल्पापत्यः कर्कनवांशकस्थेल्पगात्रः एवमादित्यस्यनवांशकावस्थितस्यग्रहदृष्ट्याचंद्रेणफलसमानमिति ८ अथास्येवनवांशकदृष्टिफलस्यविशेषंवसंततिलकेनाह वर्गोत्तमेति नवांशकव्यवस्थितेचंद्रेनवांशकदृष्टिफलंद्विःप्रकारमुक्तंशुभमशुभंच यथाआरक्षिकइतिशुभं वध

अल्पापत्योदुःखितःसत्यपिस्वेमानासक्तःकर्मणिस्वेनुरक्तः दुष्टस्त्रीष्टःकृपणश्चार्किभागेचंद्रेभानोतद्वदिद्वादिदृष्टे ८ वर्गोत्तमस्वपरगेषुशुभयदुक्तंतत्पुष्टमध्यलघुताशुभमुत्क्रमेण वीर्यान्वितांशकपतिनिरुणद्विपूर्वंराशीक्षणस्यफलमंशफलंददाति ९ इतिबृहज्जातकविवृत्तौदृष्टिफलाऽध्यायः समाप्तः १९ छ

रुचिरित्यशुभंच तत्रवर्गोत्तमांशकगतेचंद्रेयत्र ग्रहदृष्टिजंफलंशुभमुक्तं तत्पुष्टमतीवशुभंभवति स्वांशकस्थेतुयच्छुभमुक्तंतन्मध्यमं परनवांशकव्यवस्थितेयच्छुभंतल्लघुस्तोकंविज्ञेयं एवंशुभफलस्यपुष्टतामध्यतालघुताच अशुभमुत्क्रमेण अशुभमनिष्टंयत्फलंतदुत्क्रमेणविपरीतंज्ञेयं परनवांशकस्थस्यचंद्रस्ययदशुभंदर्शनफलमुक्तं तदतीवाशुभंभवति स्वनवांशकस्थस्यमध्यमं वर्गोत्तमांशकस्थस्यलघुता एवंलग्नादित्ययोरपिदृष्टिफलंयोज्यं जातकेसर्वाण्येवफलानिभवंतीतिमासं यस्माद्यवनेश्वरः अन्योन्यराश्यंशकसंप्रयोगेरन्योन्यसंदर्शनसंगमैश्च अन्योन्यसंयोगविकल्पनाभिरिदंसमुद्राम्बुवदप्रमेयमिति अतःसदेवराशिदृष्टिनवांशकदृष्टिफलयोरपिसंदेवपक्तिंप्रा

ग्नोति तत्रनवांशकपतौबलवतिराशिदर्शनफलबाधनार्थमाह वीर्यान्वितइति यस्मिन्नवांशकेव्यवस्थितश्चंद्रोलग्नंवाभवतितस्यनवांशकस्ययोधिप
तिः सचेद्वीर्यान्वितोबलवान्भवति तदानिरुणद्धि पूर्वंप्रथमंनिवारयति किंसर्वमेव नहिराशीक्षणस्यफलं नहोरादृक्काणद्वादशभागेक्षणस्य
तर्हिहत्वांशेक्षणफलमेवददाति अथांशकेपतिर्बलवान्नभवति तदाराशीक्षणांशकेक्षणफलेउभेअपिवाच्ये एवंचंद्रलग्नयोरुभयोरपि आदि-
त्यस्यतुनवांशकेक्षणफलमेववक्तव्यं यस्मात्तस्यराशीक्षणफलमिहनोक्तमिति ९ इति॰दृष्टिफला ऽध्यायएकोनविंशतिः १९ अथातो-
भावाध्यायोव्याख्यायते तत्रादित्यस्यलग्नगतस्याद्वितीयस्यस्यचफलंमंदाक्रांतयाह शूरइति शूरः संग्रामप्रियः स्तब्धः चिरकार्यकृत् वि

अथभावा ऽध्यायप्रारंभः शूरस्तब्धोविकलनयनोनिर्घृणोर्केतनुस्थेमेषेसस्वस्तिमिरनयनःसिं
हसंस्थेनिशांधः नीचें ऽधो ऽस्वः शशिगृहगतेबुद्बुदाक्षः पतंगेभूरिद्रव्योनृपहृतधनोवक्त्ररोगीद्वितीये १

कलनयनः हीनदृष्टिः निर्घृणः निर्दयः एवंविधोर्केरवौ तनुस्थेलग्नस्थे जातोभवति एतत्तावत्सर्वलग्नेषुसामान्यफलंभवति अथमेषसिंह
तुलाकर्कटानामन्यतमेलग्नगतेर्केतदापूर्वोक्तंफलंनभवति वक्ष्यमाणंचोक्तराशीनांप्रतिराशिफलंभवति मेषेसस्वइति मेषलग्नेतत्रस्थेचार्केस
स्वः सार्थः तिमिरनयनः चक्षूरोगीभवति तिमिरश्चक्षूरोगीतिप्रसिद्धः सिंहलग्नेतत्रस्थेचार्केनिशांधः रात्र्यंधोभवति आदित्यस्यनीचः
तुलातस्मिन्लग्नगतेतत्रस्थेचार्केसूर्येऽधः नेत्रहीनो ऽस्वः दरिद्रश्चभवति शशिगृहेकर्कटेलग्नेतत्रस्थेपतंगेचार्केबुद्बुदेक्षणः पुष्पिताक्षोभव
ति भूरिद्रव्यइति लग्नात्द्वितीयेर्केभूरिद्रव्यः प्रभूतार्थः नृपहृतधनः राज्ञाहृतस्वोवक्त्ररोगीमुखपीडार्तश्चभवति १ छ॰ छ॰

अथलग्नात् द्वितीयतृतीयचतुर्थपंचषष्ठस्थानस्थार्कफलमोपछंदसिकेनाह मतीतिमतिः बुद्धिः विक्रमः पराक्रमः एतौविद्येतेयस्य तथाविधस्तृतीयगेःर्के रवौभवति विस्रवोदुःखितःपीडितमानसः नित्योद्विग्नचित्तः एवंविधश्चतुर्थगेर्केजातोभवति असुतःविपुत्रः धनवर्जितोदरिद्रः एवंविधस्त्रि- कोणेपंचमस्थेरवौजातोभवति बलवान् बलयुक्तः शत्रुजितश्च शत्रुभिरिरिभिः जितः एवंविधः शत्रुयातेषष्ठस्थानःस्थेर्केजातोभवति केचिद्बलवा- न्नष्टरिपुश्चशत्रुयातइतिपठंति तथाचसत्यः षष्ठेरिपुरोगशोकघ्नः आचार्येणात्रयवनेश्वरमतमंगीकृतं यतः षष्ठस्थानस्थितानांपापानांयवने श्वरेणानिष्टफलमभिहितं तथाचशक्तिध्वजः षष्ठाश्रितोर्कोविषशस्त्रदाहक्षुद्रोगशत्रुव्यसनोपतप्तं कामाश्मपातोचविशीर्णदंतान्यूनेटवीदंष्ट्रिनखि

मतिविक्रमवान्तृतीयगेःर्केविस्रवःपीडितमानसश्चतुर्थे असुतोधनवर्जितस्त्रिकोणेबल वान्छत्रुजितश्चशत्रुयाते २ स्त्रीभिर्गतःपरिभवंमदगेपतंगेस्वल्पात्मजोनिधनगेविकलेक्षण श्च धर्मसुतार्थसुखभाक्सुतशौर्यभाक्खेलाभेप्रभूतधनवान्पतितस्तुरिःफे ॥ ३ ॥ ७ ॥

क्षतांश्च कुजोगतस्तत्रपरिक्षतांगंदृग्व्याधितंधिक्कृतिकर्शितंच सौरःशिरोश्मशनिपातवातार्द्रमुष्टिघातोपहतंचकुर्यात् अनेनैवातिदेशंपापानामा चार्यः करिष्यत्यर्कवत् २ अथलग्नात्सप्तमाष्टनवमदशमैकादशद्वादशस्थेःर्केजातस्यस्वरूपंवसंततिलकेनाह स्त्रीभिर्गतइति पतंगेआदित्ये मदनगेसप्तमस्थानस्थेजातः स्त्रीभिः योषिद्भिः परिभवंगतः प्राप्तोभवति केचिन्महतेपतगइतिपठंति निधनगेअष्टमस्थेपतंगेसूर्येस्वल्पा त्मजः अल्पापत्यः विकलेक्षणश्च विकलेअक्षीणियस्य अदृढचक्षुर्भवति हीनदृष्टिर्भवतीत्यर्थः धर्मेनवमस्थेसुतार्थसुखभाक् सुताःपुत्राः

अर्थोधनंसुखंसुखस्वभावः एवंभागीभवति केचिद्धर्मसुतार्थरहितइतिपठंति तथाचसत्यः साध्वाचारविरोधरुजः मदोदैन्यवृन्नवमसंस्थः खेदशमेसुखशौर्यभाक् सुखितोबलीचभवति लाभेएकादशेप्रभूतधनवान् बहुवित्तोभवति रिःफेद्वादशेपतितः स्वकर्मपरिभ्रष्टोभवति इत्यादित्यचारः ३

अथचंद्रेलग्नाद्द्वितीयतृतीयचतुर्थपंचमषष्ठस्थेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह मूकइति मूकोवाग्घीनः उन्मत्तः धातुवैषम्याद्यथेष्टकारी जडः अप्रतिपन्नः अंधः नेत्रहीनः हीनः अनुचितकर्मकृत् बधिरः श्रोत्रेंद्रियहीनः प्रेष्योदासः एषामन्यतमोजातः शशांकोदयेशशांकेचंद्रेउदयगेलग्नस्थेजातोभवति एतन्मेषवृषकर्कटवर्ज्यतेषांविशेषमाह स्वर्क्षाजोच्चगतइति स्वर्क्षः कर्कटकः तस्मिंल्लग्नेतत्स्थेचंद्रमसिधनीवित्तवान्भवति अजेमेषलग्नेतत्स्थेचंद्रमसिबहु-

मूकोन्मत्तजडांधहीनबधिरप्रेष्याःशशांकोदयेस्वर्क्षाजोच्चगतेधनीबहुसुतःसस्वःकुटुंबीधने हिंस्रोभ्रातृगतेसुखेसतनयेतत्प्रोक्तभावान्वितोनैकारिर्मृदुकायवह्निमदनस्तीक्ष्णोलसश्चारिगे ४

सुतः प्रभूतपुत्रोभवति चंद्रस्योच्चोवृषः तस्मिल्लग्नेचंद्रेसस्वः अर्थवान्भवति धनेलग्नात्द्वितीयेचंद्रेकुटुंबी बहुकुटुंबोभवति भ्रातृगतेतृतीयस्थानस्थेहिंस्रः क्रूरोभवति प्राणिवधकोवा सुखेचतुर्थेसतनये तनयेनपंचमेनस्थानेनयुक्तेनतत्प्रोक्तभावान्वितस्तेनप्रोक्तेनकथितेनभावेनान्वितोयुक्तोभवति तेनसुखेसुखितस्तनयेपुत्रान्वितइति नैकारिरित्यनेकारिः बहुशत्रुः मृदुकायः सुकुमारशरीरः मृदुवह्निः नातिप्रदीप्ताग्निः मृदुमदनः मैथुनशीघ्रगः तीक्ष्णउग्रस्वभावः अलसः क्रियास्वपटुः एवंविधोरिगेलग्नात्षष्ठस्थेचंद्रेजातोभवति ४

अथलग्नात्सप्तमाष्टमनवमदशमैकादशद्वादशस्थेचंद्रेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह ईर्ष्युरिति ईर्ष्युःपरार्द्धिमत्सरी तीव्रमदः अतिमदनः एवंविधोमदे सप्तमस्थेचंद्रेजातोभवति बहुमतिः बहुमज्ञः चपलबुद्धिरित्यर्थः व्याध्यर्दितः रोगपीडितः एवंविधोऽष्टमस्थेचंद्रेजातोभवति सौभाग्यंसर्वजनवाल्लभ्यं आत्मजाःपुत्राः मित्राणिसुहृदः बांधवाःस्वजनाः धनंवित्तंएषांभागीभवति शीतगौचंद्रेधर्मस्थेनवमस्थानाश्रितेजातोभवति निष्पत्तिः निष्पादनंसर्व कर्मसमुपैतिगच्छति धर्मधनधीशौर्यैर्युतः धर्मेणधनेनवित्तेनधियाबुध्याशौर्येणबलेनयुतः एवंविधः कर्मगेदशमस्थानस्थेचंद्रेजातोभवति - ख्यानइतिख्यानःसर्वत्रप्रसिद्धः भावगुणान्वितः भावोएकादशोलाभस्थानंतेनान्वितः सलाभइत्यर्थः एवंविधोभवगतेएकादशस्थेचंद्रेजातोभवति

ईर्ष्युस्तीव्रमदोमदेबहुमतिर्व्याध्यर्दितश्चाष्टमेसौभाग्यात्मजमित्रबंधुधनभाक्धर्मस्थितेशीतगौ नि
ष्पत्तिंसमुपैतिधर्मधनधीशौर्यैर्युतःकर्मगेख्यातोभावगुणान्वितोभवगतेक्षुद्रोंगहीनोव्यये ॥ ५॥

क्षुद्रोहिंस्रस्वभावः अंगहीनः अवयवरहितः एवंविधोव्ययेद्वादशस्थेचंद्रेजातोभवति इतिचंद्रचारः ५. अथलग्नादिस्थयोर्भौमबुधयोर्जातस्य स्वरूपंवसंततिलकेनाह लग्नइति लग्नस्थेकुजेप्रहारादिनाक्षततनुः विक्षतशरीरः धनगेद्वितीयस्थेकदन्नः कुत्सितान्नाशीभवति धर्मेनवमेऽघवान् पापरतोभवति अन्यसंस्थोदिनकरप्रतिमः अन्येषुपरिशिष्टस्थानेषुस्थितोदिनकरप्रतिमोर्कतुल्यफलः तृतीयचतुर्थपंचमषष्ठसप्तमाष्टमदशमैका दशद्वादशेषुयान्येवादित्यस्यफलान्यभिहितानितान्येवभौमस्यवाच्यानि तद्यथा तृतीयेमानविक्रमवांश्चतुर्थेधसुखः पीडितमानसः पंचमेसुत धनवर्जितः षष्ठेबलवान् शत्रुजितः सप्तमेस्त्रीभिः परिभवंगतः अष्टमेस्वल्पात्मजः नवमेविकलेक्षणः दशमेसुखशौर्यवान् एकादशेप्रभूत

धनवान् द्वादशेपतितः इतिभौमचारः अथबुधचारः विद्वान्धनीत्यादि ज्ञेबुधेलग्नगतेविद्वान्पंडितोभवति द्वितीयेधनवान् तृतीयेप्रखलः प्रकर्षेणख
लोदुर्जनः चतुर्थेपंडितः पंचमेमंत्री षष्ठेशत्रुः विगतरिपुः सप्तमेधर्मज्ञः अष्टमेविश्रुतगुणः प्रख्यातगुणः परतो ऽनंतरान्यस्थाने ऽर्कवत् सूर्यवत्
नवमदशमेकादशद्वादशेषुयान्यर्कस्यफलान्यभिहितानितान्येवबुधस्यवाच्यानि तद्यथा नवमेसुकृतार्थसुखभाक् दशमेसुखशौर्यभाक् एकादशे
प्रभूतधनवान् द्वादशेपतितइति इतिबुधचारः ७ अथलग्नादिस्थस्यजीवस्यफलमिंद्रवज्रयाह विद्वानिति जीवेगुरौविलग्नात्प्रभृतिस्थिते

लग्नेकुजेस्ततनुर्धनगेकदन्नोथर्मेभयवान्दिनकरप्रतिमोन्यसंस्थः विद्वान्धनीप्रखलपंडितमंत्र्य
शत्रुधर्मज्ञविश्रुतगुणःपरतोर्कवज्ज्ञः ६ विद्वान्सुवाक्यःकृपणःसुखीचधीमानशत्रुःपितृतोधिक
श्च नीचस्तपस्वीसधनःसलाभःखलश्चजीवेक्रमशोविलग्नात् ७ श्रीगजाननप्रस०

षु द्वादशेषुस्थानेषुक्रमशः परिपाट्यैतानिफलानि तद्यथा लग्नस्थेगुरौविद्वान्पंडितोभवति द्वितीयेसुवाक्यः शोभनवचनः तृतीयेकृपणः अदाता
चतुर्थेसुखी पंचमेधीमान् बुद्धिमान् षष्ठेशत्रुः विगतरिपुः सप्तमेपितृतोधिकः पितुः सकाशात्गुणाधिकः अष्टमेनीचः स्वकुलाननुचितकर्म
कृत् नवमेतपस्वी विद्यमानतपाः दशमेसधनः सवित्तः एकादशेसलाभः लाभयुक्तः द्वादशेखलः क्रूरचेष्टः इतिबृहस्पतिचारः ७
अथलग्नादिस्थस्यशुक्रस्यफलंचित्रतयाह स्मरनिपुणइति स्मरनिपुणः कामकुशलः सुखितः संजातसुखः एवंविधोविलग्नस्थेभृगुपु
त्रेशुक्रेजातोभवति प्रियकलहः कलहवल्लभः सुरतेषुः सुरताभिलाषी एवंविधो ऽस्तगतेसप्तमस्थेशुक्रेजातोभवति तनयगतेपंचमस्थे

शक्रेस्फुरितोभवति गुरुवदतो न्यगृहे अतोस्मात्स्थानत्रयादन्यस्मिन् गृहेस्थानेगुरुवत् जीववत्फलानिवक्तव्यानि द्वितीयतृतीयचतुर्थषष्ठाष्ट
मनवमदशमैकादशद्वादशेषुयान्येवगुरोः बृहस्पतेःफलान्यभिहितानि तान्येवशुक्रस्यवक्तव्यानि तद्यथा द्वितीयेस्फुवाग्म्योभवति तृतीयेकृपणः
चतुर्थेसुखी षष्ठेःशत्रुः अष्टमेनीचः नवमेतपस्वी दशमेसधनः एकादशेसलाभः द्वादशेखलः सधनोंत्ये अंत्येमीने यत्रतत्रभावस्थेसधनः
वित्तवान्भवति स्थानोक्तंतत्फलंनभवति केचिद्गुरुवदन्यतस्तुझषेद्रविणीस्यादितिपठंति अतोनंतरंपरिशेषस्थानेषुगुरुवत् झषेमीनेद्र
विणीस्यात् भवेदिति इतिशुक्रचारः ८ अथलग्नादिस्थस्यसौरस्यफलंशिखरिण्याह अदृष्टार्थोरोगीति अदृष्टार्थः नित्यंदरिद्रः रो

**स्मरनिपुणःस्फुरितस्त्वविलग्नेप्रियकलहोस्तगतेस्फुरतेस्फः तन**
**यगतेस्फुरितोम्हगुपुत्रेगुरुवदतोन्यझ्झषेद्रविणीस्यात् ॥ ८॥**

रोगीव्याधितः मदनवशगः कामाधीनः अत्यंतमलिनः अतीवमलोपेतः शिशुत्वेबाल्येपीडार्तोव्याध्यर्दितः अलसवाक् अव्यक्तभाषीएवंविधः सवि-
तृस्फुतेसौरेलग्नस्थितेजातोभवति यदितुलधन्विमकरकुंभमीनानामन्यतमोराशिः लग्नगतोनभवति तदा तदेतदुक्तंफलंभवति एषामन्यतमेल
ग्नेगतस्यसौरस्यफलमाह गुरुस्वर्क्षोच्चस्थइति गुरुक्षेत्रे धन्विमीनौ शनैश्चरस्यस्वर्क्षेस्वक्षेत्रेमकरकुंभौतस्यैवोच्चस्तुला एषामन्यतमोराशिःयदि
लग्नगतोभवति तत्रस्थितेचसौरेनृपतिसदृशः राजतुल्योभवति ग्रामपुरपः ग्रामाणांपुराणांचाधिपतिः स्फुविद्वान्पंडितः चार्वंगः शोभनावयवश्च
भवति केचित्स्फुटस्वर्क्षोच्चस्थइतिपठंति तदप्युक्तं यस्मात्सारावल्यामुक्तं स्वोच्चेस्वजीवभवनेक्षितिपालतुल्योलग्ने ऽर्कजेभवति देशनराधि

नाथः शेषसुदुःखगदपीडितएवबाल्येदारिद्र्यकामवशगोमलिनोऽसभ्य १ दिनकरसमोन्यत्रकथितइति अन्यत्रद्वितीयादिषुस्थानेषुदिनकरसमोऽर्कतुल्यः कथितउक्तः यान्यादित्यस्यफलान्यभिहितानितान्येवसौरस्यवाच्यानि तद्यथा द्वितीयेभूरिद्रव्योनृपहृतधनोवक्त्ररोगीचभवति तृतीयेमतिविक्रमवान् चतुर्थेविसुखःपीडितमानसः पंचमेअसुतोधनवर्जितः षष्ठेबलवान् शत्रुनिर्जितः सप्तमेस्त्रीभिः परिभवंगतः अष्टमेस्वल्पात्मजोविकलेक्षणश्च नवमेसुतार्थसुखभाक् दशमेसुखशौर्यभाक् एकादशेप्रभूतधनवान् द्वादशेपतितइति इतिशनैश्चरचारः ९ अथलग्नादारभ्ययेतन्वादयोभावास्तेषुभावेषुव्ययेस्थितानांसर्वेषामेवग्रहाणांफलविशेषंमालिन्याह सुहृदिति यदेतत्प्रतिगृहंलग्नात्प्रभृतिद्वादशसुस्थानेषुफल

अदृष्टार्थोरोगीमदनवशगोत्यंतमलिनः शिशुत्वेपीडार्त्तःसवितृसुतलग्नेत्यलसवाक्
गुरुस्वर्क्षोच्चस्थेनृपतिसदृशोग्रामपुरपःसुविद्वांश्चार्वंगोदिनकरसमोन्यत्रकथितः ९

मनुपरिचिंत्यं भावाः तनुकुटुंबसहोत्थादयः लग्नदेहादिभावैरिति लग्नंदेहः शरीरंपरिकल्प्यम् लग्नादारभ्यतनुकुटुंबसहोत्थादयोभावाः परिकल्प्याः अत्रकाप्राप्तिः तत्रोच्यते अस्त्येव यस्माद्यवनेश्वरः मूर्तिंचहोरांशशिभंचविंद्यादिति अत्रशशिभान्नपरिकल्प्यालग्नात्परिकल्प्याः तेषुशरीरादिभावेषुयोग्रहोव्यवस्थितः सतस्यभावस्यपुष्टिंह्रसतांवाकरोति कथमित्याह सुहृदरिपरकीयःस्वर्क्षतुंगस्थितानांफलमनुपरिचिंत्यमिति सुहृत्क्षेत्रंमित्रर्क्षं अरिक्षेत्रंशत्रुभं परकीयमुदासीनभं स्वर्क्षमात्मीयक्षेत्रं तुंगमुच्चभं एतेषुस्थानेषुस्थितानांफलमनुपरिचिंत्यम् परिकल्प्य भावस्थोग्रहोयादृशेक्षेत्रेभवतितादृशंफलंप्रयच्छति नन्वत्रसुहृदादिक्षेत्राणांपरिगणनाकृता तत्रनशुभांशुभफलवि

भागउक्तः उच्यते अर्थादेवैतल्लभ्यते तथामित्रक्षेत्रस्थोभावदृद्धिंकरोति शत्रुक्षेत्रादिस्थश्चतद्धानिं तत्रचयेशुभाशुभक्षेत्रेणोक्तात्रिकोणनीचभेतीपद्या
द्धे मित्रादिक्षेत्रान्यक्षेत्रोपलक्षणानिज्ञेयानि कःपुनरपिअरिपरकीयोर्विशेषउच्यते उदासीनोत्रपरोभिप्रेतः अरिःशत्रुः परउदासीनः तत्रैतदुक्तंभ
वति पापःसौम्योवा नीचस्थः शत्रुक्षेत्रस्थोवा यस्मिन्भावेव्यवस्थितः तस्यभावस्यहानिंकरोति उदासीनक्षेत्रस्थोनहानिंनचवृद्धिं मित्रक्षेत्रे
स्वक्षेत्रेमूलत्रिकोणेस्वोच्चेव्यवस्थितोभावस्यवृद्धिमिति एतत्केषांचिन्मते तथाचभगवान्गार्गिः नीचर्क्षरिपुगेहस्थोग्रहोभावविनाशकृत् उ
दासीनगृहेमध्योमित्रर्क्षस्वत्रिकोणगः स्वोच्चगश्चग्रहोवश्यंभाववृद्धिकरःस्मृतइति सत्याचार्यस्तुपुनःसमुपचयविपत्तीसौम्यपापेषुकथयति य

सत्वदरिपरकीयस्वर्क्षतुंगस्थितानांफलमनुपरिचिंत्[illegible]देहादिभावैः समु
पचयविपत्तीसौम्यपापेषुसत्यःकथयतिविपरीतंरिःफषष्ठाष्टमेषु ॥१०॥

स्मिन्भावेसौम्याः स्थितास्तस्यभावस्यसमुपचयंवृद्धिंकुर्वंति यस्मिन्भावेपापाः स्थितास्तस्यभावस्यविपत्तिंहानिंनकुर्वंति किंतुरिःफषष्ठाष्टमेष्वेतद्वि-
परीतंकथयंति रिःफेद्वादशेस्थानेसौम्याः भावहानिंकुर्वंति पापाः वृद्धिं तेनरिःफेसौम्याव्ययहानिंकुर्वंति पापाः व्ययवृद्धिं षष्ठेसौम्याः शत्रुहानिं
कुर्वंति पापाःशत्रुवृद्धिं अष्टमेसौम्याः मृत्युहानिंकुर्वंति पापाःमृत्युवृद्धिमिति तथाचसत्यः सौम्याःपुष्टिंपापास्तद्धानिंसंस्थिताग्रहाःकुर्युः मूर्त्या
दिषुनिधनेंत्येषष्ठेचविपर्ययात्फलदाः ननुपूर्वंसौम्यानांपापानांचोपचयस्थानावस्थितानांशुभंफलंव्याख्यानंतत्कथं षष्ठस्थाःपापाः शत्रुवृद्धिंकुर्वंति
अत्रोच्यते पूर्वंसामान्येनोक्तं यत्रचवाचनिकीबाधाभवति तत्रसामान्यंभावफलंत्यक्त्वायथोक्तफलंवक्तव्यं यद्येवंकथंस्वल्पजातकेउक्तं पुष्णातिशु

भाभावान्मूर्त्यादौ यंतिसंस्थिताःपापाः सौम्याःषष्ठेरिप्फाः सर्वेनेष्टाव्ययाष्टमगाइति अत्रोच्यते बृहज्जातके आचार्येणोक्तंस्वल्पजातकेन्याचार्यमतेन प्रतिज्ञेयमाचार्येण ज्योतिषमागमशास्त्रंविप्रतिपत्तौनयोग्यमस्माकं स्वयमेवविकल्पयितुंकिंतुबहूनांमतंवक्ष्ये यत्राचार्याणांसमसंख्यानांमतभेद स मतंभवति तत्रवराहमिहिरोमतद्वयमपिदर्शयति तथाचबृहद्यात्रायामन्यरूपांग्रहकुंडलिकांस्वल्पयात्रायांसामान्यरूपांपठति एवंबृहदल्पयो विवाहपटलयोरपि १० अथग्रहकुंडलिकाफलविशेषमनुष्टुभाह उच्चेति ग्रहकुंडलिकायांफलंद्विविधमुक्तं शुभमशुभंच तत्रयच्छुभंफ- लं तदुच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगे ग्रहे दत्तंयथाक्रमंपादोनदलपादाल्पनिष्फलंभवति तेनोच्चस्थोग्रहः संपूर्णंप्रयच्छति मूलत्रिको

उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः शुभंसंपूर्णपादोनद
लपादाल्पनिष्फलम् ११ इतिबृह॰भावाऽध्यायःसमाप्तः ॥२०॥

णस्थःपादोनंस्वक्षेत्रस्थोऽर्द्धं मित्रक्षेत्रस्थः पादफलं शत्रुक्षेत्रस्थः पादादप्यल्पम् नीचस्थोस्तमितश्चनकिंचिदपि एवंशुभफलं शुभग्रहणा देवाशुभस्यग्रहस्यव्युत्क्रमोव्याख्येयः तत्रास्तमितोनीचस्थश्चाशुभंफलंसंपूर्णंप्रयच्छति शत्रुक्षेत्रस्थः पादोनंमित्रक्षेत्रस्थोऽर्द्धंस्वक्षेत्रस्थः पादम् त्रिकोणस्थः पादादप्यल्पं उच्चस्थोनकिंचिदपि एवंजातककालेग्रहस्यावस्थानात्फलंवाच्यं दशाष्टकवर्गादिफलपक्तिकालेशुभम शुभंवापुष्टफलंबलवानेवप्रयच्छति एतच्चपूर्वमेवव्याख्यातं उक्तंच तत्कालंबलयुक्तोभवति यदिदशाधिपस्तस्यशुभमशुभंवापिफलंव क्तव्यंनित्यमेवपरिपूर्णं ११ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृत्तौभावाऽध्यायोविंशतिःसमाप्तः २० श्रीरामचंद्रायनमः

अथातआश्रययोगाध्यायोव्याख्यायते तत्रादावेवैकादिसंख्योत्तरवृद्ध्यास्वगृहगतानांग्रहाणांमित्रक्षेत्रगतानांचफलंपुष्पिताग्रयाह कुलसमकुलेति
स्वभेषुस्वराशिष्वेकवृद्ध्यास्थितैःग्रहैर्जाताः कुलसमकुलमुख्यबंधुपूज्याधनिसुखिभोगिनृपाः पुरुषाभवंति यस्मिन्तस्मिन्ग्रहेस्वक्षेत्र
गतजातः कुलसमः स्वकुलतुल्योभवति एवंद्वयोः स्वक्षेत्रस्थयोः कुलमुख्यः स्वकुलप्रधानः स्वकुलाधिकः त्रिषुबंधूनांपूज्यः चतुर्षुधनीवित्तवा
न् पंचसुसुखी षट्सुभोगीनृपतुल्यः केचिन्नृपइतिपठंति सचोपमानान्नृपतिरिवभूपस्तत्समत्वमेवमुक्तं स्वल्पजातकेप्युक्तं कुलतुल्यकुला-
धिकबंधुमान्यधनिभोगिनृपसमनरेंद्राः एवंषट्सुनृपसमः सप्तसुनृपोराजा एवंगुणः एकोत्तरवृद्ध्यास्वक्षेत्रगेषुजातोभवति परविभवेत्यादि

कुलसमकुलमुख्यबंधुपूज्याधनिसुखिभोगिनृपाः स्वभैकवृद्ध्या प
रविभवसुहृत्स्वबंधुपोष्यागणपबलेशनृपाश्चमित्रभेषु ॥ १ ॥

एकवृध्याइत्यनुवर्तते मित्रभेष्वेकवृद्ध्यास्थितेषु परविभवसुहृत्स्वबंधुपोष्यागणपबलेशनृपाश्चजाताभवंति तेनैकस्मिन्मित्रक्षेत्रस्थेग्रहेजातः
परविभवपोष्योभवति पराजीवीत्यर्थः द्वयोः सुहृत्तोष्यः त्रिषुस्वपोष्योज्ञातिपोष्योभवति चतुर्षुबंधुपोष्यः भ्रातृपोष्यइत्यर्थः पंचसुगणपः गण
स्वामी षट्सुबलेशोसेनापती सप्तसुनृपोराजा १ अथोच्चगतस्यैकस्यापिमित्रदृष्टस्यफलमेकोत्तरवृद्ध्यानीचशत्रुस्थानांचमालिन्याह
जनयतीति एकोप्युच्चगतोग्रहोमित्रदृष्टः सुहृदवलोकितः नृपंराजानंजनयति उत्पादयति एवमेकोप्युच्चगतोमित्रयोगान्मित्रयुक्तत्वात्प्रचुर
धनसमेतंसिद्धंचजनयति प्रचुरधनसमेतं पर्याप्तवित्तयुक्तंसिद्धंचसर्वत्रावाप्तपूजंजनयति विधनविसुखमूढेत्यादि एकवृद्ध्येत्यनुवर्तते एक

दृष्ट्वाशत्रुनीचर्क्षगेषु शत्रुक्षेत्रस्थेषु नीचगेषुवाग्रहेषुविधनविस्फरवमूढव्याधिताबंधतप्तावधदुरितसमेताजाताः भवंति तेनयस्यजन्मन्येकोग्रहः शत्रुक्षेत्रगोनीचगोवाभवतिसविधनः विगतधनोभवति दरिद्रः यस्यद्वौ सविस्फरवोदुःखितः यस्यत्रयः समूढः विचित्तः यस्यचत्वारः सव्याधितः पीडितः यस्यपंचसबंधनतप्तोभवति यस्यषट्सतप्तोभवति बहुदुःखसंतप्तः यस्यसप्तसवधदुरितसमेतोभवति वधवध्योदुरितंदुष्कृतं वध एवदुरितंतेनसमेतोशुक्तोवा नीचेयद्यपिसप्तनसंभवंति तथापिवज्रादिवत्पूर्वशास्त्रानुसारेणतत्फलोपदेशः २ अथकुंभलग्नजातस्याःशुभं फलमुपजातिकयाह नकुंभलग्नमिति सत्याचार्यः कुंभलग्नंजन्मनिनशुभमाह नशोभनमुक्तवान् तथाचसत्यः जन्मनिचंद्रः श्रेष्ठः प्रवदेद्धोरा

जनयतिनृपमेकोप्युच्चगोमित्रदृष्टः प्रचुरधनसमेतंमित्रयोगाच्चसिद्धं वि
धनविस्फरवमूढव्याधितोबधतप्तोवधदुरितसमेतःशत्रुनीचर्क्षगेषु ॥२॥

रिनिधनवर्ज्यःस्यात् होराचभवेदिष्टाद्विपदेष्विहकुंभवर्ज्येहि कुंभविलग्नेजातोभवतिनरोदुःखशोकसंतप्तइति नभागभेदादिति पुराणयवना भागभेदाद्वादशभागभेदाज्जन्मनिकुंभलग्नमशुभमिति यस्यतस्यलग्नस्यकुंभद्वादशभागेजन्मनशुभमितितेषांमतंनकुंभलग्ने तथाच तन्म तानुसारिणाश्रुतकीर्तिनाप्युक्तं सर्वस्मिल्लग्नगतेकुंभाद्दूरांशकोयदाभवति शशोनतदासुखितः परान्नभोजीभवेत् पुरुषइति अत्रविष्णु गुप्तचाणक्यावाहतुः कस्मांशभेदइति यदुक्तं भागभेदात्कुंभलग्नंजन्मनिनशुभं तत्कस्यराशेर्लग्नगतस्य कुंभद्वादशभागोनास्त्यपितुसर्व स्यैवास्तिविद्यते यस्माद्यदिकुंभस्यद्वादशभागोनशुभस्तदासर्वाण्येवलग्नोक्तानिफलानिनिरर्थकानिभवंति तस्मादतिप्रसंगः तेनकुंभलग्न

मेषाशुभंनतद्भागभेदइति तथाचतद्वाक्यम् कुंभद्वादशभागोलग्नगतोन प्रशस्यतेयवनैः यद्येवंसर्वेषांलग्नगतानामनिष्टफलंनस्यात् यदयोगाद्रा-
शीनांनचतत्सर्वशास्त्रकाराणांतस्मात्कुंभविलग्नोजन्मन्यशुभोनतद्भागइति ३ अधुनाहोरास्थानांग्रहाणांफलंवसंततिलकेनाह यातेष्विति
असद्ग्रहाः पापाः तेषसत्सु पापेषु समभेषु विषमराश्यवस्थितेषुनकेवलंयावद्दिनेशहोरामादित्यहोरांयातेषुप्राप्तेषुविषमराशिषुपापाः प्रथ
मार्द्धस्थायदाभवंति तदाजातः ख्यातः सर्वत्रप्रसिद्धः महोद्यमबलार्थयुतः महत्सुकार्येषूद्यमरतोबलवान् वीर्यवान् अर्थयुतोधनवान्
अतितेजाअतितेजस्वीभवति चांद्रीशुभेष्विति युजियुग्माशौशुभेषुसौम्यग्रहेषुचांद्रींहोरांयातेषुसमराशिषुप्रथमार्द्धस्थाः सौम्याः भवं

नकुंभलग्नंशुभमाहसत्योनभागभेदाद्यवनावदंति कस्यांशभेदोनतथास्तिराशेरतिप्रसंगस्त्वि
तिविष्णुगुप्तः ३ यातेष्वसत्स्वसमभेषुदिनेशहोरांख्यातोमहोद्यमबलार्थयुतोतितेजाः चां
द्रींशुभेषुयुजिमार्दवकांतिसौख्यसौभाग्यधीमधुरवाक्ययुतःप्रजातः ४

ति तदाजातोमार्दवयुतोमृदुस्वभावः
कांतियुतोद्युतिमान् सौख्ययुतः सुखान्वितः सौभाग्ययुतः सर्वजनप्रियः धीयुतः मतिमान् मधुरवाक्ययुतः प्रियंवदः एतैः गुणैर्युक्तो-
जातोभवति ४ अथपुनरपिहोरागतंफलमिंद्रवज्रयाह तास्वेवेति तास्वेवपूर्वोक्तासुहोरास्वपरर्क्षगेष्वन्यराश्याश्रितेषुजातानराः स
र्वेषुपूर्वोक्तगुणेषुमध्याःभवंति एतदुक्तंभवति समराशिषुरविहोरायांपापग्रहाणामवस्थानंभवति तदाजातानांपूर्वोक्तगुणामध्याभवंति
एवंविषमराशिषुचंद्रहोरायांसौम्यग्रहाणामवस्थानंभवति तदाजातानांपूर्वोक्तगुणामध्याभवंति व्यत्यस्तहोराभवनस्थितेष्विति व्यत्य

स्तासु विपरीतस्थासु होरासु व्यस्तस्तेषु च भवनेषु राशिषु स्थितेषु ग्रहेषु जाता मर्त्या मनुष्या उक्तगुणैः प्रागुद्दिष्टैः गुणैः विहीना वर्जिता भवंति ए
तदुक्तं भवति समराशिषु चंद्रहोरायां पापानामवस्थानं भवति तदा जाता महोद्यमबलार्थहीना भवंति वितेजसश्च एवं विषमराशिषु आदित्य
होरायां सौम्यानामवस्थानं भवति तदा जाता मार्दवकांतिसौख्यसौभाग्यधीमधुरवाक्यविहीना जाता भवंति अत्र च दर्शिते ग्रहावस्थाने यथा
यथा ग्रहबहुलत्वं भवति तथा तथा गुणबहुत्वं वक्तव्यं ५ अथ द्रेष्काणावस्थानाच्चंद्रस्य फलं वसंततिलकेनाह कल्याणरूपगुणमिति आ
त्मीयद्रेष्काणे यदा चंद्रः स्थितो भवति अथवा सुहृद्द्रेष्काणे स्थितस्तदा जातः कल्याणरूपगुणः प्रशस्तरूपः प्रशस्तगुणश्च भवति आत्मी-

तास्वेव होरास्व परर्क्षगेषु ज्ञेया नराः पूर्वगुणेषु मध्याः व्यत्य
स्तहोराभवनस्थितेषु मर्त्या भवंत्युक्तगुणैर्विहीनाः ॥ ५॥

यद्रेष्काणमित्रद्रेष्काणावस्थानं विनान्यद्रेष्काणावस्थिते चंद्रमसि विचारः यस्मादुक्तान्यगस्तदधिनाथगुणं करोति यस्मिन्द्रेष्काणे चंद्रमा व्यवस्थि
तस्तस्य यो धिपतिः स यदि चंद्रस्य तत्कालमध्यस्थस्तदा जातस्य मध्यमो रूपगुणो भवतः अथ द्रेष्काधिपतिश्चंद्रस्य तत्कालमरिस्तदा जातो रू
पगुणहीनो भवति व्यालोद्यतायुधेति व्यालद्रेष्काणः सर्पद्रेष्काणस्तत्रस्थे चंद्रे जातः तीक्ष्ण उग्रो भवति उद्यतायुधद्रेष्काणः सायुधस्तत्स्थे
चंद्रे जातो तिहिंस्रो मारणात्मको भवति प्राणियातरत इत्यर्थः चतुश्चरणः चतुष्पदद्रेष्काणः तत्रस्थे चंद्रे गुरुतल्परतो गुरुदाराभिगामी भ
वति अंडजद्रेष्काणः पक्षिद्रेष्काणस्तत्रस्थे चंद्रे ऽटनः परिभ्रमणशीलो भवति आत्मीयादिद्रेष्काणस्थे चंद्रमसि व्यालद्रेष्काणस्थे चंद्रे सप्रव

तः फलद्वयमपिवक्तव्यं अत्रव्यालद्रेष्काणाः कर्कटद्वितीयः वृश्चिकाद्यः मीनतृतीयः उद्यतायुधद्रेष्काणः मेषाद्यः मेषतृतीयः मिथुनद्वितीयः सिंहाद्यः तुलद्वितीयः कुंभाद्यश्च अत्रापिगुणद्वयातभूतद्रेष्काणस्थेचंद्रेफलद्वयंवक्तव्यमिति ६ अधुनामेषादिनवांशकजातस्यस्वरूपंशालि-न्याह स्तेनइति मेषवर्ज्यमन्यस्मिन्राशौमेषलग्नगते नवांशकेजातः स्तेनश्चौरोभवति वृषवर्ज्यवृषनवांशकेजातोभोक्ता असंचयशीलः एवं-मिथुनवर्ज्यमिथुननवांशकेजातः पंडितोविद्वान्भवति कर्कटनवांशकेजातः आढ्यः ईश्वरः सिंहांशकेनरेंद्रोराजा कन्यांशकेक्लीबः पुरुषाकाररहितः तुलांशकेशूरः संग्रामभियः वृश्चिकांशकस्थेविष्टिकृद्भारजीवी धन्व्यंशकेदासवृत्तिः मकरांशकेपापः कुंभांशकेहिंस्रः क्रूरः मीनांशके

कल्याणरूपगुणमात्मसकृद्दृक्काणेचंद्रोन्यगस्तदधिनाथगुणंकरोति व्यालोद्यतायुधचतु
ष्पदजेषुतीक्ष्णोऽतिहिंस्रगुरुतल्परतोऽटनश्च ६ स्तेनोभोक्तापंडिताढ्योनरेंद्रःक्लीबः
शूरोविष्टिकृद्दासवृत्तिः पापोहिंस्रोऽभीश्ववर्गोत्तमांशेष्वेषामीशाराशिवद्द्वादशांशेः ॥ ७ ॥

भीः निर्भयः केचिद्धीरितिपठंति अधीः बुद्धिरहितः आचार्यस्यचाभीरभिमतं तथाचस्वल्पजातके तस्करभोक्तृविचक्षणधनिनृपतिनपुंसकाभयदरिद्राः खलपापोग्रोत्कृष्टामेषाद्यानांनवांशभवाइति वर्गोत्तमांशेष्वेषामीशाः एष्वेवराशिषुवर्गोत्तमांशेषुजाताएषामेवपूर्वोक्तानामीशाः स्वामिनोभवंति एतदुक्तंभवति मेषलग्नेमेषनवांशकेजातश्चौरस्वामीभवति वृषलग्नेवृषनवांशकेजातोभ्रातॄणामसंचयशीलानांस्वामीभवति एवंमिथुनेपंडितस्वामी कर्कटलग्नेईश्वराणांस्वामी महाधनिकः सिंहेनृपस्वामी महाराजाधिराजः कन्यायांक्लीबस्वामी तुलेशूर

राणांस्वामी वृश्चिके भारवाहानांस्वामी धन्विनिदासानांस्वामी मकरेपापानांस्वामी कुंभेक्रूराणांस्वामी मीनांशके भयानांस्वामी राशिवद्द्वादशांशेरिति द्वादशांशेः राशिवत्फलानिवाच्यानि यानिमेषादिस्थेचंद्रमसिफलान्यभिहितानि वृत्तानामग्र्यंगत्येवमादीनितान्येवमेषादिद्वादशांशकजातस्यवक्तव्यानीति ७ अथभौमसौरयोः स्वत्रिंशांशकस्थयोःफलंवसंततिलकेनाह जायान्वितइति जायान्वितोभार्यायुक्तः बलंवीर्यंविभूषणान्यलंकरणानि सत्वमौदार्यमेतैर्युक्तः तथातितेजाः अतिसाहसेनासमीक्षितकार्यकरणेनचयुक्तः एवंविधः कुजेभौमेस्वभागेस्वत्रिंशांशकस्थेजातोभवति रोगीव्याधितः मृतस्वयुवतिः मृतास्वाआत्मीयायुवतिर्भार्यायस्य विषमः क्रूरः अन्यदारोऽन्यसंबंधिनीदारायस्य परदारासक्तः दुःखी-

जायान्वितोबलविभूषणसत्वयुक्तस्तेजोतिसाहसयुतश्चकुजेस्वभागे
रोगीमृतस्वयुवतिर्विषमोन्यदारोदुःखीपरिच्छदयुतोमलिनोर्कपुत्रे ८

नि सुखः परिच्छदयुतः गृहवस्त्रपरिवारोपेतः मलिनः मलोपेतः एवंविधोर्कपुत्रेसौरेस्वत्रिंशांशकस्थेजातोभवति नन्वत्रत्रिंशांशकग्रहणंनास्ति तत्कथंज्ञायते त्रिंशांशकफलमेतत् उच्यते शक्रफलाभिधानेत्रिंशांशकग्रहणंभविष्यति ८ अथजीवबुधयोःस्वत्रिंशांशकस्थयोः जातस्यस्वरूपंवसंततिलकेनाह स्वांशइति धनेनवित्तेनयशसाकीर्त्यासुखेननिर्दुःखतेनबुद्ध्याप्रज्ञयाचयुक्तः तेजस्वीसोत्साहः पूज्यः लोकवंद्यः निरुक् स्वस्थदेहः उद्यमवान् उत्थानशीलः भोगवान् भोगसंयुक्तः एवंविधोगुरौजीवेस्वत्रिंशांशकस्थेजातोभवति मेधाबुद्धिः कलागीतवाद्यनृत्यपुस्तकचित्रकर्मादिकाः कपटः दांभिकत्वं काव्यंकवेःकर्म विवादः वाक्यद्वंद्वं शिल्पंतक्षकर्मादि शास्त्रार्थः सतामाचारान्

स्थानं साहसमसमीक्षितकार्यकरणशीलता अतिमान्योतिपूज्यः एवंविधाः शशिजेबुधेस्वत्रिंशांशकस्थेजाताः भवंति केचिदत्रसर्वत्रैकवचनमे
वेच्छंति तथापिनकश्चिद्दोषः ९ अथशुक्रस्यस्वत्रिंशांशकस्थस्य भौमादित्रिंशांशकस्थयोश्चंद्रार्कयोश्चजातस्यस्वरूपंमंदाक्रांतयाह
स्वेत्रिंशांशेति बहुसुतः प्रभूतपुत्रः बहुसुखोऽपरिमितसुखः आरोग्येणनिरोगतया भाग्यैःजनप्रियत्वेन अर्थेनधनेन रूपेणसुचारुतयासंयुक्तः
केचिद्भार्यार्थरूपइतिपठंति भार्ययाकलत्रेण तथातीक्ष्णःक्रूरः सुललितवपुः शोभनशरीरः सुप्रकीर्णेंद्रियः विक्षिप्तेंद्रियार्थः सुप्रकीर्णानि
विक्षिप्तानींद्रियाणियस्य बहुस्त्रीगमनशीलः एवंविधः शुक्रेस्वत्रिंशांशकस्थेजातोभवति शूरस्तब्धावित्यादिआरपूर्वांशकेषुभौमप्रथमेषु-

> स्वांशेगुरोधनयशःसुखबुद्धियुक्तास्तेजस्विपूज्यनिरुद्यमभोगवंतः मेधाकलाकपटकाव्यविवादशिल्पशास्त्रा
> र्थसाहसयुताशशिजेतिमान्याः ९ स्वेत्रिंशांशेबहुसुतसुखारोग्यभाग्यार्थरूपः शुक्रेतीक्ष्णःसुललितवपुःसुप्र
> कीर्णेंद्रियश्च शूरस्तब्धोविषमवधकोसद्गुणाढ्योसुखिज्ञोचार्वंगेष्टोरविशशियुतेष्वारपूर्वांशकेषु १० इतिःआ-या-२१

भागेषुरविशशियुक्तेष्वर्कचंद्रसंयुक्तेषुयथासंख्यफलानि तद्यथा भौमत्रिंशांशकस्थेर्के शूरःसंग्रामप्रियः चंद्रेस्तब्धश्चिरकारी सौरत्रिंशांशक-
स्थेर्के विषमःक्रूरःभवति चंद्रमसिवधकः जीवत्रिंशांशकस्थेऽर्केसद्गुणोभवति चंद्रमस्याढ्यः ईश्वरः बुधत्रिंशांशकस्थेर्केसुखीभवति चंद्रेज्ञः
पंडितः शुक्रत्रिंशांशकस्थेर्केचार्वंगः शोभनशरीरः चंद्रमसीष्टः सर्वजनप्रियः एवमारपूर्वेषशेषुआरोंगारकः पूर्वः प्रथमोयेषामंशकानांत्रि-
शद्भागानांतेष्विति १० इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृत्तौआश्रययोगाऽध्यायएकविंशतिःसमाप्तः २१ श्रीसांबसदाशिवम्

अथातःप्रकीर्णकाध्यायोव्याख्यायते मिश्रःप्रकीर्णकइत्युच्यते तत्रग्रहाणांपरस्परंकारकसंज्ञांवेतालीयेनाह स्वर्क्षेति स्वर्क्षेस्वक्षेत्रेयोग्रहःस्थितः यश्चतुंगेस्वोच्चे यश्चमूलत्रिकोणेस्थितः साचयदिलग्नकंटकेषुकेंद्रेषाश्रितःस्थितोभवति एवंविधस्यग्रहस्यान्योप्येवंविधः केंद्रगोयदिभवति तदातौग्रहावन्योन्यंपरस्परंकारकाख्योभवतः अनेनप्रकारेणयः कर्मगःयोयस्मात् ग्रहात्दशमस्थानस्थः सविशेषतः विशेषेणतेषांग्रहाणामध्यात्कारकसंज्ञालभते अतउक्तं कर्मगस्तुतेषांविशेषतइति १ अथास्यैवोदाहरणप्रदर्शनार्थंरथोद्धतयाह" कर्कटेति यथाकर्कटोदयेकुलीरलग्नेतत्स्थेचोडुपेचंद्रेकुजोंगारकः यमः सौरः अर्कः आदित्यः सूरिः बृहस्पतिः एतेकुजयमार्कसूरयः स्वोच्चगाः आत्मीयतुंगस्था

**स्वर्क्षतुंगमूलत्रिकोणगाःकंटकेषुयावंतआश्रिताः स**
**र्वएवतेन्योन्यकारकाः कर्मगस्तुतेषांविशेषतः ॥ १ ॥**

यदिभवंति कुजोमकरेयमस्तुलेअर्कोमेषेसूरिःकर्कटे तदातेपरस्परमन्योन्यंकारकानिगदिताउक्ताः अनेनप्रकारेण यावंतोभवंतितावंतः परस्परकारकाख्याः अनेनोदाहरणेनैतत्प्रतिपादितंभवति यथापुरुषस्यजन्मलग्नेकेंद्रंविना स्वक्षेत्रउच्चत्रिकोणगाः अपिसंततंपरस्परंकंटकगास्तदाकारकसंज्ञामपिलभंते लग्नगस्येति लग्नगस्थग्रहस्यप्राग्लग्नेसमवस्थितस्यसकलः सर्वोग्रहोंबरगः दशमस्थानस्थश्चांबुगश्चतुर्थस्थानस्थश्चकारकसंज्ञोभवति अनेनैतदुक्तंभवति लग्नगोग्रहः स्वक्षेत्रगोच्चत्रिकोणेषुयद्यपिभवति तस्माद्योदशमस्थस्तुर्योवासोप्युच्चत्रिकोणस्वक्षेत्राणामन्यतमस्थोभवति त

५ ३ ६ चं· ४ बृ· २ श· ७ सू· १ ८ मं· १० १२ ९ ११

थापिलग्नगतस्यसकारकाख्योभवति नतस्यलग्नगतइति अतउक्तं लग्नगस्यसकलोंबरांबुगइति २ अथपुनरपिअन्यत्कारकलक्षणमनुष्टुभाह
स्वत्रिकोणोच्चगइति स्वत्रिकोणोच्चगोग्रहः कारकत्वेहेतुः कारणंनकेंद्रस्थः यतोन्योस्यग्रहस्यलग्नेकेंद्रेविनाप्यवस्थितस्ययदिकश्चिद्ग्रहः
कर्मगोदशमस्थानस्थोभवतिसचस्वक्षेत्रोच्चमूलत्रिकोणानामन्यतमेनभवति तस्माच्चदशमस्थस्ययदिस्यात्तन्मित्रंनिर्गतोनकेवलंयावत्तद्गुणसंपन्न
स्तेनमित्रगुणेनसंयुक्तस्तात्कालिकेमित्रामित्रविधिनाधिमित्रताप्रातास्तथाविधः सर्वग्रहः कारकाख्योभवति यस्यचदशमः सतस्यकारकाख्यो
नभवति कारकसंज्ञाचयात्रायामुपयुज्यते यतस्तत्रोक्तं रिक्तोपहतदशायांजन्मोदयनाथशत्रुपाकेच स्वदेशेशकारकदशासंश्रयणीयोनरेंद्रपति

कर्कटोदयगतेयथोडुपेस्वोच्चगाःकुजयमार्कसूरयः कारकानिगदिताःपरस्परंलग्नगस्यसकलोंब
राबुगः २ स्वत्रिकोणोच्चगोहेतुरन्योन्यंयदिकर्मगः सुहृत्तद्गुणसंपन्नःकारकश्चापिसस्मृतः ३
शुभंवर्गोत्तमेजन्मवेशिस्थानेचसद्ग्रहे अशून्येषुचकेंद्रेषुकारकाख्यग्रहेषुच ॥ ४ ॥

रिति तथासप्तरविवेशिग्रहयुक्तःकारकर्क्षेपिचंद्रःजयसुखधनदातातस्यहर्तान्यथेति ३ अथकारकसंज्ञाप्रयोजनमनुष्टुभाह शुभमिति यं
स्यलग्नवांशेवर्गोत्तमाख्येजन्मभवति चंद्रोपिवावर्गोत्तमांशगतोभवति तस्यशुभंजन्मयस्मिन्राशौपुरुषस्यजन्मसमयेर्कः स्थितस्तस्माद्राशेः
योद्वितीयोराशिः सवेशिसंज्ञः यस्यचप्रागुक्तेवेशिस्थानेसद्ग्रहः सौम्यग्रहोज्ञगुरुसितानामन्यतमोभवति तस्यापिशुभंजन्म यस्यजन्मलग्नंकेंद्र
चतुष्टयादेकमप्यशून्यंकेंद्रंभवति तस्यापिशुभंजन्म अत्रसौम्यग्रहाधिष्ठितेकेंद्रेविशेषणशुभंजन्म यस्मादुक्तमनेनैव एकस्मिन्नपिकेंद्रेयदि

सौम्योमग्रहोस्तियात्रायां जन्मन्यथवाकर्मणिनतच्छुभंप्राहुराचार्याः यस्यजन्मनिकारकाख्याः कारकसंज्ञाग्रहा भवंति तस्यापिशुभंजन्म अत्रयथा गुणाधिक्यंतथाशुभतरमेवजन्म ४ अथयेनयोगेनजातोयौवनेसुखीभवति दशापतिफलपाकंवैताळीयेनाह मध्येवयसइति गुरुर्जीवः जन्म नियत्रराशौचंद्रमाः स्थितः तदधिपतिः जन्मपः यस्मिल्लग्नेजातः तदधिपोलग्नपः एषामन्यतमोयस्यलग्नकेंद्रेभवति तस्यवयोमध्येसुखप्र- दोभवति यौवनेसुखीभवतीत्यर्थः अत्रचयवनेश्वरः लग्नाधिपोलग्नपतिश्चयेषांचतुष्टयेस्याद्बलवान्गुरुर्वा चतुर्षुहोरादिषुसंगतःस्याच्चतुर्व यःकाउफलप्रदस्यात् पृष्ठोभयेत्यादिदशापतिर्दशाप्रवेशकाले पृष्ठोदयराशिगोमेषवृषधन्विमकराणामन्यतमस्थितोयदाभवति तदास्वदशां

मध्येवयसः सुखप्रदाः केंद्रस्थागुरुजन्मलग्नपाः पृ
ष्ठोभयकोदयर्क्षगास्त्वंततःप्रथमेषुपाकदाः ॥ ५॥

तेफलप्रदोभवति अथोभयोदयेमीनेभवतितदांतर्दशामध्येफलप्रदोभवति अथकोदये शीर्षोदयेमिथुनसिंहकन्यातुलावृश्चिककुंभानामन्यत मेयदाभवति तदाप्रथमदशाप्रवेशसमयेफलप्रदोभवति एवंशुभस्याप्यशुभस्यवापक्तिर्वाच्या दशाकालंत्रिधापरिकल्प्ययस्मिन्कालेत- स्यफलपक्तिर्ज्ञायते आद्येमध्येंत्येवातत्र चंद्रः सत्फलबोधनानिकुरुतेपापानिचातोन्यथेति एतत्त्रिधाविभक्तेदशाकालेज्ञेयं पूर्वोक्तंसर्वद- शाफलंयोज्यं दशापतिःप्रवेशकालेतिष्ठन्नेवतत्फलंददातीत्येतत्कथंगम्यते यवनेश्वरादिभिः सामान्येनचोक्तं उच्यते भगवतोगर्गवचनात् तथाचभगवान्गार्गिः आद्यंतमध्यफलदः शिरःपृष्ठोभयोदये दशाप्रवेशसमयेतिष्ठन्वाच्योदशापतिरिति ५ ६ ७ ७

अथाष्टकवर्गफलस्यकालंपुष्पिताग्रयाह दिनकरेति चारवशात्पत्तिकालेयस्मिन्राशौशुभमशुभंवाष्टकवर्गफलंदिनकरआदित्यः प्रयच्छति तस्मि
न्राशौप्रवेशकालेआद्येत्रिभागेतिष्ठन्नेवफलंप्रयच्छति एवमेवरुधिरोभौमः गुरुर्जीवः भृगुःशुक्रः एतौगुरुभृगुजौभवनस्थराशेर्मध्ययातौ
मध्यत्रिभागगतौफलप्रदौभवतः रविसुतःसौरः शशीचंद्रः एतौरविसुतशशिनौविनिर्गमस्थौराश्यंतत्रिभागस्थौफलप्रदौभवतः शशितनयोबुधः
सर्वकालंफलदः सर्वभागस्थोफलप्रदोभवति सर्वस्मिन्नेवराशौयावत्तिष्ठतितावत्फलंशुभमशुभंवायथाप्रासंददातीति ६ इतिश्रीभट्टोत्पल
वि०वृ० प्रकीर्णाऽध्यायोद्वाविंशतिः २२ अथातोऽनिष्टाध्यायोव्याख्यायते तत्रादावेवदारसुतहीनजन्मज्ञानंशार्दूलविक्रीडितेनाह लग्ना

दिनकररुधिरौप्रवेशकालेगुरुभृगुजौभुवनस्यमध्ययातौ रविसुतशशि
नौविनिर्गमस्थौशशितनयःफलदस्तुसर्वकालं ६ इतिप्रकीर्णाऽध्यायः२२

दिति यस्यजन्मनिलग्नात्पुत्रभंपंचमस्थानंशुभग्रहेणस्वपतिनाचप्रासंसंयुक्तंभवत्यथवाआलोकितंदृष्टंभवति तस्यापिपुत्रसंपत् अस्ती
तिवक्तव्यं चंद्राद्वापंचमस्थानंयस्यशुभग्रहेणस्वपतिनावायुतदृष्टंभवति तस्यापिपुत्रसंपदस्ति यस्यलग्नचंद्रयोरुभयोरपिपंचमस्थानंशु
भग्रहेणस्वपतिनावायुतदृष्टंनभवति तस्यपुत्रासंभवः अपुत्रत्वंवक्तव्यं अत्रकेचिद्द्वादशप्रकारंपुत्रंवर्णयंति औरसः क्षेत्रजः दत्तः
कृत्रिमः अधमप्रभवः गूढोत्पन्नः अपविद्धः पौनर्भवः कानीनः सहोढः दासीप्रभवश्चेति तथाचसारावल्याम् शुभभवनमथशुभयु
तंशुभदृष्टंवासुतर्क्षमिहयेषां तेषांप्रभवःपुंसांभवत्यवश्यंनविपरीतं १ एकतमेगुरुवर्गेशुभराशावौरसोभवेत्पुत्रः लग्नाच्चंद्राद्यथवाब

लग्नुक्तादीक्षितोपिवासौम्यैः २ संख्यानवांशतुल्यासौम्यांशेतावतीसदादृष्टा शुभदृष्टेनद्विगुणाक्लिष्टापापांशकेतथादृष्टा ३ सारर्क्षेसौरगुणोबुधदृष्टोगुरुकुजार्कदृष्ट्यहीनः क्षेत्रजपुत्रंजनयतिबोधोपिगुणोरविजदृष्टः ४ मांदस्कृतर्क्षेमिंदुर्निरीक्षतेयदिशनैश्चरेणयुतं दत्तकपुत्रोत्पत्तिः क्रीतश्चबुधस्यचैवंस्यात् ५ सप्तमभागेकोजेसौरयुतेपंचमेसदाभवने कृत्रिमपुत्रंविंद्याच्छेषग्रहदर्शनान्मुक्ते ६ वर्गेपंचमराशौ-सौरेसूर्येचतत्रसंयुक्ते लोहितदृष्टेवाच्योजातश्चस्कृतोधमप्रभवः ७ चंद्रेभौमांशगतेधीस्थेमंदावलोकितेभवति गूढोत्पत्तिर्भवेत्पुत्रःशेषग्रहदर्शनीयाते ८ तस्मिन्नेवचभौमेशनिवर्गस्थेनिरीक्षितेरविणा पुरुषस्यभवतिपुत्रोऽपविद्धइतिचरकमुनिवचनात् ९ शनिवर्गस्थेचंद्रेशनियुक्तेपंचमेसदासौरे शुक्ररविभ्यांदृष्टेपुत्रःपौनर्भवोभवति १० चूडायदार्कसत्वात्कलादृतस्यैवपंचमेभवने रविदृष्टेप्यथसहितेकानीनःसभवतिपुत्रः ११ वर्गेरविचंद्रमसोःस्कृतगेहेचंद्रसूर्यसंयुक्ते शुक्रेणदृष्टमात्रेपुत्रःकथितःसहोदश्च १२ पापैर्बलिभिर्युक्तेपापक्षेपंचमेसदाराशौ जातोपुत्रःपुरुषःसौम्यग्रहदर्शनातीते १३ शुक्रनवांशेतस्मिन्शुक्रेणनिरीक्षितेत्वपत्यानि दासीप्रभवानिवदेच्चंद्रेपिकेचिदाचार्याः १४ सितशशिवर्गेधीस्थेताभ्यांदृष्टेथवापिसंयुक्ते प्रायेणदारिकास्युस्तद्राशिगणोपिवान्यथापुत्राइति १५ एवंलग्नाच्चंद्राद्वाकलत्रभंसप्तमंस्थानंयस्यशुभेनस्वपतिनावायुक्तदृष्टंभवति तस्यकलत्रसंपदस्तीतिवक्तव्यं एवंलग्नाच्चंद्राद्वायस्यसप्तमस्थानंशुभग्रहेणस्वपतिनावायुतदृष्टंनभवतितस्यकलत्रसंपन्नभवतीतिवक्तव्यं भार्यातस्यनभवतीत्यर्थः यतउक्तं ज्ञेयोन्यथासंभवःअन्यथातयोःपुत्रकलत्रयोरसंभवःअभावोज्ञेयोज्ञातव्यः अत्रपुत्रकलत्रग्रहणमुपलक्षणार्थं सर्वेषामपितन्वादीनांभावानांलग्नाच्चंद्राद्वास्थितिरन्वेष्या यतोद्वावेतौमूर्त्तिसंज्ञौ तथाचयवनेश्वरः मूर्तिंचहोरांशशिभंचविंद्यादिति अत्रकलत्रस्थानेपिकेचिद्विशेषंवर्णयंति शु

केंद्रजीवशशिजैः सकलैस्त्रिभिश्चद्वाभ्यां कलत्रभवनेचतथैककेन एषांग्रहैर्पिचगणेर्थविलोकितेवासंतिस्त्रियोभवनवर्गस्वगस्वभावाः १ एवंक्रूरे
र्नीशोलग्नाच्चंद्राद्वदेच्चबलयोगात् शशिरविजयोः कलत्रेभार्यापुंसांपुनर्भूःस्यात् २ भवनाधिपांशतुल्याभवंतिनार्योनिरीक्षणाद्वापि एकैवरविकु
जांशेगुरुबुधयोश्चापियामित्रे ३ भर्येणचंद्रसितयोर्बलसंयुक्तेथवापियामित्रे दृष्टेवाबहुपत्न्योभवंतिशुक्रेविशेषेण ४ गुरुशुक्रयोःस्वव-
र्गेरविकुजशशिभानुजेर्भवंत्यूनाः शुक्रेवेश्याभार्याश्चंद्रेपिवदंतिकेतुमालाख्याः ५ पाथेनेत्यादि पाथेनः कन्यातस्मिन्नुदयेगतेलग्नस्थेन

अथानिष्टाध्यायः लग्नात्पुत्रकलत्रभेशुभपतिप्राप्तेथवालोकितेचंद्राद्वायदिसंपद
स्तिहितयोर्ज्ञेयोन्यथासंभवः पाथेनोदयगेरवौरविसुतोमीनस्थितोदारहापुत्रस्था
नगतस्त्वपुत्रमरणंपुत्रोवनेर्यच्छति १ उग्रग्रहैःसितचतुरस्रसंस्थितैर्मध्यस्थितेभृ
गुतनयेथवोग्रयोः सौम्यग्रहैरसहितसंनिरीक्षितेजायावधोदहननिपातपाशजः ॥ २ ॥

त्रचरवावर्केस्थितेरविसुतः सौरः मीनस्थोयदिभवति तदादारहाभवति दारान्कलत्राणिहंति घातयति तस्यपुरुषस्यजीवतएवभार्यामरणंवक्त
व्यम् अस्मिन्नेवयोगेपाथोनोदयगेरवौ अवनेःभूमेःपुत्रोभौमः पुत्रस्थानेगतः पंचमेस्थानेगतोमकरेस्थितोभवति तदापुत्रमरणं सुत
विपत्तिंयच्छति ददाति तस्यजीवतएवपुत्रमरणंवक्तव्यं १ अथजीवतएवभार्यामरणयोगद्वयंमहर्षिणयाह उग्रग्रहैरिति उग्रग्रहाः
आदित्यभौमसौराः तैः सितात्शुक्राद्यथासंभवंचतुरस्रसंस्थितैः चतुर्थाष्टमगतैः यस्यजन्मभवति तस्यजायावधोभार्याविपत्तिः द

हनेनाग्निनाभवति तस्यजीवतएवभार्याग्निनात्मानंव्यापादयति अथवोग्रयोः पापयोः द्वयोर्मध्येशुक्रादेकोद्वादशेऽन्योद्वितीयेभृगुतनयेशुक्रे-
स्थितेजातस्यनिपातेनोच्छ्रितपतनाज्जायावधोभवति तस्यजातस्यजीवतएवपतनान्निपतिताभार्याम्रियतइति अथवैकस्मिन्राशावेकेनभु
क्तंस्थानमतिक्रम्यान्येनभुज्यमानमप्राप्ययदिशुक्रस्यावस्थानंतदापिपापद्वयमध्यस्थोभवति अथयस्यजन्मनिसौम्यग्रहयोरन्यतमेनसहि
तः संयुक्तः शुक्रोनभवति नचापितन्निरीक्षितोदृष्टस्तस्यपाशजोजायावधोभवति जीवतएवभार्याद्बंधनेनात्मानंव्यापादयति के-
श्चिद्योगद्वयमेतद्व्याख्यातं उग्रग्रहैःसितचतुरस्रसंस्थितैरेकःमध्यस्थितेभृगुतनयेथवोग्रयोः द्वितीयः सौम्यग्रहैरसहितः सन्निरीक्षित

लग्नाद्व्ययारिगतयोःशशितिग्मरश्म्योःपत्न्यासहैकनयनस्यवदंतिजन्म
द्यूनस्थयोर्नवमपंचमसंस्थयोर्वाशुक्रार्कयोर्विकलदारमुशंतिजातम् ३

इति योगद्वयविशेषभूतजा
यावधोदहननिपातपाशजः इतियोगद्वयेपिविकल्पः तच्चायुक्तं यस्माद्भगवान्गार्गिः चतुर्थाष्टमगैः शुक्रात्सौरारार्कैर्हुताशनात् तेषांद्वयोस्तुमध्यस्थेत
थाशुक्रेनिपातजः शुक्रेसद्योगदृष्टिहीनेपाशाज्जायावधोभवेत् २ अधुनाविकलनयनदारजन्मयोगज्ञानंवसंततिलकेनाह लग्नादिति शशीचंद्रः तिग्मर-
श्मिः सूर्यः एतयोः लग्नाद्व्ययारिगतयोः एकोव्ययेद्वादशेस्थानेद्वितीयोरिस्थानेषष्ठेपत्न्यासहैकनयनस्यएकाक्षस्यजन्मवदंतिकथयंति जातःकाणोभव
तिनकेवलंयावत् तद्भार्याकाणीभवतीत्यर्थः द्यूनस्थयोरिति शुक्रसूर्ययोर्द्यूनस्थयोः लग्नाद्वयोरपिसप्तमस्थयोः नवमयोः पंचमयोर्वाजातंविकलदार-
मुशंति कथयंति भार्याहीनांगाभवतीत्यर्थः अत्रद्यूनस्थयोःनवमपंचमसंस्थयोर्वाशुक्रार्कयोःकेश्चिद्यथासंभवमेवयोगोव्याख्यातः तच्चायुक्तम्

